अभ्यमित्राद्लंगामीत्यर्थे छः पाक्षिको भवेत् ।
सूक्ते साम्नि च वाच्ये तु मत्वर्थाच्च विधीयते ॥

पितृष्वसुरपत्ये छण् तथा मातृष्वसुश्च सः ।
कृशाश्वादेस्तदस्मिन् स्यादित्याद्यर्थचतुष्टये ॥

श्रविष्ठापाढयोश्चापि जातार्थे तु छणिष्यते ।
तथैवाभिजनेऽर्थे तु सलातुरपदादपि ॥

तित्तिर्यादेस्तु संप्रोक्तः प्रोक्तार्थे प्रत्ययश्च सः ।
तदस्थे वाच्ये तथा प्रोक्तो वेणुकादिभ्य एव च ॥

शेषेऽर्थे भवतस्तु स्याच्छप्रत्यय इतीरितम् ।
प्रकारवचने त्वर्थे जातीयर्प्रत्ययो मतः ॥

तस्य मूल इतीहार्थे जाहच्प्रत्यय ईरितः ।
सास्यां क्रियेति ञः प्रोक्तो रूप्योत्तरपदाद् भवे ॥

मत्वर्थे तु मघोश्च स्याद् भागे पष्ठाष्टमात् तथा ॥
अपत्यादिविकारार्थे पृथिव्या ञा प्रकीर्तितः ।

शेषेऽर्थे तु ञिठः प्रोक्तः काश्यादिभ्यश्च संस्मृतः ॥
तथा पदादिपूर्वाच्च कालाञ्ञिठ उदाहृतः ।
पूगात् त्वग्रामणीपूर्वात् स्वार्थे ञ्यप्रत्ययो मतः ॥

तथा स्वार्थेऽस्त्रियां मातच्फञोरपि नगीरितम् ।
प्रगदिनप्रभृतिभ्यश्च तदस्त्यादिचतुष्टये ॥

गम्भीरात्तु भवेऽर्थे चाप्यव्ययीभावतस्तथा ।
विदूराच्च प्रभवतेः युक्ते गृहपतेश्च सः ॥

सोऽस्याभिजन इत्यर्थे शण्डिकादिभ्य एव च ।
छन्दोगादेस्तु धर्म्येऽर्थे आम्नाये वा प्रकीर्तितः ॥

शरणोपानहोश्च स्यात् तदर्थी प्रकृतिर्यदि ।
अनन्तावसथयोश्चापि तथैवेतिहभेषजात् ॥

स्वार्थे ञ्यप्रत्ययः प्रोक्तस्तादर्थ्ये त्वतिथेः स्मृतः ।
ञ्यङ् च वृद्धेत्कोसलाजादपत्यार्थे विधीयते ॥

वाहीकायुधजीविभ्यः सङ्घेभ्यो ञ्यडुदाहृतः ।
स्वार्थे एव च ते सङ्घा राजन्या ब्राह्मणा न चेत् ॥

स्त्रियां फल्गुन्यषाढाभ्यां टप्रत्यय उदाहृतः ।
तदस्मै देयमित्यर्थे श्राणामांसौदनाट्टिठन् ॥

क्रीतार्थे कंसशब्दाच्च टिठन्प्रत्यय इष्यते ।
नासिकाया नते टीटच् संज्ञायामवशब्दतः ॥

स्वार्थे टेण्यण् वृकात् प्रोक्तः सङ्घादायुधजीविनः ।
देवतार्थेऽस्ति सोमाट्ट्यण् तेन सौम्यः प्रकीर्तितः ॥

क्षायसाद्यव्ययेभ्यश्च शेषेऽर्थे ट्युट्युलौ मतौ ।
ठगपत्ये तु संप्रोक्तो रेवत्यादिभ्य एव हि ॥

वृद्धात् सौवीरगोत्राच्च स्यादपत्यस्य कुत्सने ।
लाक्षाया रोचनायाश्च शकलादपि कर्दमात् ॥

रक्तार्थेऽयं प्रत्ययः स्यात् संस्कृते दध्न इष्यते ।
अश्वत्थाच्चाग्रहायण्या अस्तीत्यर्थे च स स्मृतः ॥

अधीते वेद इत्यर्थे क्रतूक्थादिभ्य एव च ।
सूत्रान्ताच्चापि तद्वत् स्यात् वसन्तादिभ्य एव च ॥

अर्थे तदस्मिन्नस्तीति शर्करायाः समिष्यते ।
कन्थायाश्च भवाद्यर्थे शेषेऽर्थे भवतः स्मृतः ॥

वर्षाभ्यश्च प्रायभवे तूपजानूपकर्णतः ।
उपनीवेश्च तद्वत् स्यादायस्थानागते तथा ॥

द्व्यचः शब्दादृदन्ताच्च ब्राह्मणादेश्च ठक् स्मृतः ।
सोऽस्य सेव्य इतीहार्थे त्वचित्ताद् देशकालतः ॥

तस्येदमिति चार्थे तु हलसीराट्ठगिष्यते ।
परिमाणार्थवाचिभ्यो विकारेऽर्थेऽपि चेष्यते ॥

"ठक् स्यात् पूर्वं वहत्यर्थाद् दीव्यत्यथ खनन् जयन् ।
जितं च संस्कृततरच्चरन्तश्चाथ जीवति ॥
हरन्निर्वृत्तसंसृष्टे उपसिक्तं च वर्तते ।
यच्छत्युञ्छन्प्लवन् कुर्वन् हन्ति तिष्ठति धावति ॥
गृह्णाति च चरत्येति समवैति च पश्यति ।
धर्म्यं चावक्रयः पण्य, शिल्पं प्रहरणं मतिः ॥
शीलं वृत्तं हितं भक्षा दीयते च नियोजितः ।
अध्यायी च व्यवहरन् वसतीत्यर्थकेऽपि च ॥"

एष्वर्थेषु हि संप्रोक्तो विशेषस्त्वभिधीयते ।
हलसीराद् वहत्यर्थे साध्वर्थे तु कथादितः ॥

क्रीतार्थे चासमासे स्यान्निष्कादिभ्य इतीरितम् ।
शमने कोपने चार्थे वातादिभ्यष्ठगिष्यते ॥

अर्हत्यर्थे तथैवाहुरासक्ते तूदरात् स्मृतः ।
अयःशूलपदाच्चापि दण्डाजिनपदात् तथा ॥

पार्श्वेनान्विच्छतीत्यर्थे ठक्रमेनं प्रचक्षते ।
छेदादिभ्यस्तु नित्यं स्यादर्हत्यर्थ इतीरितम् ॥

अङ्गुल्यादिपदात् तुल्ये स्वार्थे स्यादनुगादिनः ।
कुमुदादेष्ठचं प्राहुर्निर्वृत्ताद्यर्थ एव हि ॥

वृत्ताध्ययनकर्मार्थे बह्वच्पूर्वपदात् तथा ।
बह्वचश्चानुकम्पायां तद्युक्ते नीतिवाचके ॥

मनुष्यनाम्नष्ठन् तुल्ये लोकशाखापदात् तथा ।
कालवाचकशब्दात् देवतार्थे च ठञ् स्मृतः ॥

देये संवत्सरादाग्रहायण्याश्च प्रकीर्तितः ।
वाच्ये मृगे व्याहरतौ तथा सोढे च कीर्तितः ॥

अन्तःपूर्वपदाट्ठञ् स्यादव्ययीभावतो भवे ।
तथा समानशब्दाच्च समानादेश्च स स्मृतः ॥

अध्यात्मादिपदाच्चैव लोकान्ताच्च विधीयते ।
अन्तोदात्ताद् बह्वचोऽपि व्याख्याने ग्रन्थ इष्यते ॥

अत्रार्थे क्रतुयज्ञेभ्य ऋष्यध्यायेष्वपि स्मृतः ।
विद्यायोनिजसम्बन्धवचनाच्च ऋदन्ततः ॥

भक्त्यर्थे च महाराजशब्दादप्ययमिष्यते ।
गोपुच्छाच्च तरत्यर्थे चरतौ श्वगणादपि ॥

आक्रन्दाद् धावतीत्यर्थे पण्येऽर्थे लवणादपि ।
परश्वधात् प्रहरणे साध्वर्थे तु गुडादितः ॥

क्रीते गोपुच्छसङ्ख्यादेर्निष्कात्तु द्वित्रिपूर्वकात् ।
बिस्ताच्च विदितेऽर्थे तु लोकाद्वै सर्वलोकतः ॥

वापस्थानमितीह्यर्थे ठञ्प्रत्यय उदाहृतः ।
तदस्मिन् वर्ततेऽर्थे तु नवयज्ञादितो मतः ॥

तदस्मिन् दीयतेऽर्थे च परिमाणे तथैव च ।
वहत्यावहतीत्यर्थे हरतीत्यर्थकेऽपि च ॥

आराद् वंशादिपूर्वेभ्यष्ठञ्प्रत्यय उदाहृतः ।
पचत्यवहरत्यर्थे सम्भवत्यर्हतौ तथा ॥

पारायणतुरायणचान्द्रायणपदादपि ।
वर्तयत्यर्थके प्रोक्तः प्राप्ते संशयशब्दतः ॥

आहृते चोत्तरपथात् योजनाद् गच्छतौ तथा ।
क्रोशयोजनपूर्वाच्च निर्वृत्ते कालवाचकात् ॥

अधीष्टभृतभूतेषु भाविन्यर्थे च कीर्तित
षण्मासाद् वयसि चोक्ते ब्रह्मचर्येऽपि कथ्यते ॥

परिजय्ये च लभ्ये च कार्ये च सुकरे तथा ।
यज्ञाख्येभ्यो दक्षिणार्थे देयार्थे कालवाचकात् ॥

कार्येऽपि च तथा प्राहुः सम्पत्तौ च प्रकीर्तितः ।
तस्मै प्रभवतीत्यर्थे सन्तापादिभ्य एव च ॥

प्रयोजने प्रकृष्टे च ठञ्प्रत्यय उदाहृतः ।
अन्विच्छतौ तु संप्रोक्तो दण्डाजिनपदात् तथा ॥

व्रीह्यादिभ्यस्तु मत्वर्थे तुन्दादिभ्यस्तथा भवेत् ।
नावो द्व्यज्भ्यश्च तरतौ ठन्प्रत्यय उदाहृतः ॥

पर्पादिभ्यश्च तद्वत् स्यात् श्वगणादपि चेष्यते ।
जीवत्यर्थे तु वस्नाच्च तथैव क्रयविक्रयात् ॥

चरत्यर्थे प्रतिपथान्मत्वर्थे चाप्यदन्ततः ।
क्रीताद्यर्थे शताच्चैव पूरणप्रत्ययान्ततः ॥

अर्थाच्चापि नियुक्तेऽर्थे त्वगारान्तादिति स्मृतम् ।
वहत्यावहतीत्यर्थे हरत्यर्थे तथैव च ॥

तदस्मिन् दीयतेऽर्थे च वस्नादिशब्दात् स्मृतो ह्ययम् ।
घोत्येऽनयास्ति पणमासान्निर्वृत्ताद्यर्थपञ्चके ॥

भुक्तार्थे श्राद्धशब्दाच्च ठन्प्रत्यय उदाहृतः ।
जातार्थे मासषष्ठ्यः स्यात् स्तोमे डः परिकीर्तितः ॥

अर्थे तदस्मिन्नधिकं दशान्तात्तु विधीयते ।
स्तोमार्थे पूरणार्थे च डट्प्रत्यय उदाहृतः ।
त्रिंशच्चत्वारिंशतोस्तु परिमाणे डणिष्यते ॥

यत्तद्भ्यां च डतिं केचिदिच्छन्तीति प्रदर्शितम् ॥

डाजव्यक्तानुकृतेरनितौ द्व्यजवरार्धतः ।
द्वितीयाच्च तृतीयाच्च शम्बबीजात् कृषौ स्मृतः ॥

कृञो योग इति प्रोक्तं संख्यायाश्च गुणान्ततः ।
समयाद् यापनायां च निष्कोषे चैव निष्कुलात् ॥

निष्पत्राच्च सपत्राच्च तथातिव्यथने मतः ।
सुखप्रियादानुलोम्ये शूलात् पाके च कीर्तितः ॥

प्रातिलोम्ये तु दुःखाच्च सत्यादशपथे स्मृतः ।
मद्रभद्राद् वापनेऽर्थे डाच्प्रत्यय उदाहृतः ॥

स्यादवान्तरदीक्षादेश्चरतीत्यर्थके डिनिः ।
प्रमाणे शन्शदन्ताच्च विंशतेश्च डिनिः स्मृत

अप्रपश्चाड्डिमच् प्रोक्तो जाताद्यर्थे मनीषिणा
ह्रस्वार्थके च सम्प्रोक्तः कुत्वास्तु प्रत्ययो डुप्

तदस्मिन्नस्तिनिर्वृत्तनिवासादूरसम्भवाः ।
एष्वर्थेषु ड्मतुप् प्रोक्तः कुमुदान्नडवेतसात् ॥

ड्यड्यतौ प्रत्ययौ दृष्टे वामदेवादिति स्मृतम् ।
अप्रसिद्धादपत्यार्थे पाण्डोर्ड्यण् समुदाहृतः ॥

राजार्थकेऽपि संप्रोक्तस्तथैष प्रत्ययो बुधैः ।
चातुरर्थिकशब्दाच्च नडशादाड्ड्वलच् स्मृतः ॥

ड्वुन्प्रत्ययस्त्वसंज्ञायां विंशतेस्त्रिंशतश्च सः ।
अष्टाचत्वारिंशतश्च चरतौ परिकीर्तितः ॥

इवार्थे तु शिलायाश्च ढप्रत्यय उदाहृतः ।
अपत्यार्थे प्रत्ययो ढक् भवेत् स्त्रीप्रत्ययान्ततः ॥

द्व्यज्भ्यः स्त्रीलिङ्गशब्देभ्य अनिञन्तादितस्तथा ।
काश्यपे दत्तपुत्रे तु वि ...र्णाच्च कुषीतकात् ॥

शुभ्रादिभ्यो भ्रुवश्चापि कल्याण्यादेस्तथैव च ।
मातृष्वसृपदात् तद्वत् पितृष्वसृपदात् तथा ॥

कुलटाया विकल्पेन दुष्कुलाच्च विधीयते ।
दृष्टेऽर्थे कलिशब्दाच्च ढगग्नेर्देवतार्थके ॥

नद्यादिभ्यस्तथा प्रोक्तो जाताद्यर्थे विपश्चिता ।
तूदीशब्दादभिजने कापिशार्योस्तु कर्मणि ॥

धान्यानां भवने क्षेत्रे व्रीहिशाल्योरपीष्यते ।
ढकञपत्यमित्यर्थे स्यादपूर्वपदात् कुलात् ॥

कन्यादिभ्यस्तु जातादौ वहत्यर्थे धुरस्तथा ।
कुलात् कुक्षेश्च ग्रीवाया श्वास्यलङ्कारकेऽर्थके

अपत्यार्थे चतुष्पाद्भ्यो ढञ्प्रत्यय उदाहृतः ।
गृष्ट्यादिभ्यस्तथैवेष्टोऽचतुष्पाद्वचनेऽपि च ॥

संस्कृते क्षीरशब्दाच्च संख्यादेश्चतुरर्थकात् ।
कोशशब्दाच्च सम्भूते हल्यादेस्तु भवार्थतः ॥

एणीपदाद् विकारेऽर्थे निवासे धर्मतीपदात् ।
पथ्यादिभ्यस्तु साध्वर्थे हितादौ पुरुषात् स्मृतः ।

तदस्य सम्भवेदर्थे परिखायाश्च कीर्तितः ।
अधीते वेद इत्यर्थे ढिनुक् छगलिनः स्मृतः ॥

अपत्यार्थे तु गोधाया द्रक्प्रत्यय उदाहृतः ।
अपत्ये कुत्सिते वाच्ये स्मृतो णप्रत्ययः किल ॥

फाण्टाहृतेश्च मिमतान्मतः सौवीरगोत्रगात् ।
अरण्यात्तु भवेऽर्थेऽपि णप्रत्यय उदाहृतः ॥

क्रीडायां च प्रहरणे र्थे शीले छत्रादितो मतः ।
लब्धार्थे स्वकशब्दाच्च साध्वर्थे भक्तशब्दतः ॥

दिशार्थे सर्वशब्दाच्च गच्छत्यर्थे पथश्च हि ।
सभाकथाचषब्याच्च देयेऽर्थे च स्मृतो यम् ॥

प्रज्ञाश्रद्धादिशब्देभ्यो मत्वर्थे च तथा स्मृतः ।
समूहार्थे तु पर्शोश्च णस्प्रत्यय उदाहृतः ॥

पुराणप्रोक्तकल्पेषु ब्राह्मणेषु णिनिः स्मृतः ।
अधीते वेद इत्यर्थे काश्यपात् कौशिकादपि ॥

कलापिशब्दात् तद्वत् स्यात् वैशम्पायनशिष्यतः ।
वेदे वाच्ये शौनकादेः पाराशर्यशिलालितः ॥

नटसूत्रे भिक्षुसूत्रे वाच्ये तु णिनिरिष्यते ।
कुर्वादिभ्यो ण्य एव स्यादपत्यार्थ इतीरितम् ॥

सेनान्ताल्लक्षणाच्चापि कारिणः कुरुनादितः ।
प्राग्दीव्यतीयेष्वर्थेषु दित्यादिभ्यो विधीयते ॥

सङ्काशादेश्च संप्रोक्तो ह्यस्त्यर्थादिचतुष्टये ।
साध्वर्थे समवैत्यर्थे प्रोक्तः परिषदो हि सः ॥

भूतार्थे चैव षण्मासाण्ण्यत् प्रत्यय उदाहृत ।
तदस्यास्तीति चार्थे तु कंशंभ्यां च त ईरितः ॥

स्वार्थे नवात् तनन् प्रोक्तो नूभावः प्रकृतेरपि ।
मत्वर्थे चापि तप्प्रोक्तः पर्वणो मरुतश्च हि ॥

तमप् तु स्यादतिशये तिङन्ताच्च विधीयते ।
सोऽस्यावयव इत्यर्थे संख्यायास्तयविष्यते ॥

विभज्योपपदे द्व्यर्थवचने तरविष्यते ।
समूहार्थे ग्रामजनबन्धुभ्यस्तल् तथा गजात् ॥

सहायाच्च तथा स्वार्थे देवाद् त्रावेऽपि कीर्तितः ।
तेनैकादिगितीहार्थे तसिश्च परिकीर्तितः ॥

तथापादानपञ्चम्याः स्मृतोऽहीयरुहोस्तु सः ।
अकर्त्रर्थतृतीयाया अप्ययं प्रत्ययो मतः ॥

प्रतिग्रहे चाव्यथने क्षेपे च परिकीर्तितः ।
तथैव हीयमाने च पापयोगे च संस्मृतः ॥

भिन्नपक्षस्याश्रयणे चोत्ये षष्ठ्याश्च स स्मृतः ।
त्यागे द्योत्ये तु रोगेभ्यः षष्ठ्यास्तसिरितीरितम् ॥

पञ्चम्यन्तात् किमादेस्तु स्वार्थे हि तसिलिष्यते ।
पर्यभिभ्यां च संप्रोक्तो ह्यन्येभ्योऽपि च दृश्यते ॥

तातिल् शिवशमादिभ्यः करेऽर्थेऽपि भवेऽपि च ।
मूलार्थे पक्षशब्दात्तु तिप्रत्यय उदाहृतः ॥

तदस्यास्तीति चार्थे तु कंशंभ्यां च समीरितः ।
तिकनिघ्नो मृदः स्वार्थे तीयः संख्याप्रपूरणे ॥

द्वित्रिशब्दात् त्रिशब्दस्य संप्रसारणमेव च ।
तुप्रत्ययस्तु संप्रोक्तः कंशंभ्यामिति सूत्रतः ॥

तैलच प्रत्ययः स्नेहे त्नप् स्वार्थे नवशब्दतः ।
त्यक् जातापद्यर्थके तु दक्षिणादिपदादपि ॥

उपाधिभ्यां त्यकन् प्रोक्त आसन्नारूढकार्थतः ।
अमेहक्वतसित्रेभ्यस्त्यप् भवे योऽव्ययात् स्मृतः ॥

नेर्ध्रुवे च निसस्तद्वन्निर्गते च प्रकीर्तितः ।
ऐषमो ह्यः श्वसश्चापि विकल्पेन विधीयते ॥

समूहार्थे तु गोशब्दात् त्रप्रत्यय इतीरितम् ।
जैत्रे बाहुलकात् त्रण् स्यादित्युवाच च माधवः ॥

सप्तम्यन्तात् किमादेस्तु त्रल्प्रत्यय उदाहृतः ।
तदधीने तु देये त्रा योगे कृभ्वस्तिभिः सह ॥

देवान्मनुष्यात् पुरुषात् पुरुमर्त्यात् तथैव च ।
द्वितीयार्थे च सप्तम्यागयोगेऽपि कृञादिभिः ॥

थ्यप्रत्ययश्च भावेऽर्थे ब्रह्मण्यस्यार्त्विजस्तथा ।
थमुथाल्प्रत्ययौ ज्ञेयौ प्रकारवचने किल ॥

ख्यन्प्रत्ययो हितार्थे स्यादजाविभ्यां च स स्मृतः ।
[illegible]च प्रोक्तः प्रमाणे च काले दा तु तदस्य हि ॥

इदंशब्दाच्च तच्छब्दात् काले दानीं प्रकीर्तितः ।
मध्यशब्दस्य मान्तत्वं स्याद् दिनन् प्रत्ययो भवे ॥

प्रत्ययो दूस आख्यातो दुग्धेऽर्थे त्वविशब्दतः ।
अवेषदसमासौ तु देश्यदेशीयरौ मतौ ॥

प्रमाणे द्वयसच् प्रोक्तो धा विधार्थे तु कीर्तितः ।
संख्यायाश्चाधिकरणविचालेऽपि प्रकीर्तितः ॥

स्वार्थे धेयो भागरूपनामभ्यः परिकीर्तितः ।
द्वित्र्योश्च धो ध्यमुञ् वा स्याद् विधार्थे इति कीर्तितम् ॥

एकाद्धोऽपि तथा प्राहुर्विकल्पेन मनीषिणः ।
पामादिभ्यस्तु नः प्रोक्तस्तदस्तीत्यर्थकेऽपि च ॥

पुराणार्थात् प्रशब्दाच्च स्वार्थे नप्रत्ययः स्मृतः ।
स्त्रीशब्दाच्चैव नञ् प्रोक्तो ह्यर्थेषु भवनात् पुरः ॥

विनञ्भ्यामपि नानाञौ न सहेत्यर्थके स्मृतः ।
नासिकानमने वाच्ये त्ववात्नाटच् प्रकीर्तितः ॥

विस्तारे त्वविशब्दात्तु पटच्प्रत्यय इष्यते ।
माप्ये पाशप् च संप्रोक्तः पिञ्जपेजौ तु निष्फले ॥

नासिकानमने वाच्ये नेः पिटच् परिकीर्तितः ।
गोत्रे फक् स्यान्नडादिभ्यो यूनि स्याद् यञिञोरपि ॥

शरद्वद्भृशुनकाद् गोत्रे भृग्वादिवंशजात् ।
अनन्ताद्धरितादिभ्यो गोत्रापत्ये विवक्षिते ॥

द्रोणपर्वतजीवन्ताद् विकल्पेन तथा स्मृतः ।
कुमुदादेश्च संप्रोक्तस्तदस्त्यादिचतुष्टये ॥

द्व्यचोऽणन्तादपत्यार्थे फिञ्प्रत्यय उदाहृतः ।
उक्षा फाण्टाहृतिपदान्मिमताच्च विधीयते ॥

तैकादिभ्यश्च कौसल्यकार्मार्याभ्यां तथैव हि ।

अगोत्रवाचिनो वृद्धाच्छब्दात् फिञ् स्यादुदङ्मते ॥

कर्णादेश्चापि फिञ् प्रोक्तस्तदस्त्यादिचतुष्टये ।
अवृद्धादप्यपत्यार्थे फिन् प्रोक्तः प्राङ्मतेन हि ॥

संज्ञायां तु बभ्रादिष्टौ कंसाशब्दस्वरूपतः ।
ईषदूने बहुच् प्रोक्तः सुबन्तस्यादिमश्च सः ॥

बिडज्बिरीसचौ ज्ञेयौ नीरन्ध्रार्थाच्च नेः परौ ।
भौरिक्यादिपदाद् देशे भक्तल्प्रत्यय इष्यते ॥

अवाद् अटच्प्रत्ययः स्यान्नासिकानमने सति ।
मः स्याद् भवार्थे मध्यात्तु मत्वर्थे क्षुद्रशब्दतः ॥

मध्यशब्दाद् भवार्थे च मण्मीयौ प्रत्ययौ मतौ ।
तदस्त्यादिचतुष्केऽर्थे मतुप् नद्यां प्रकीर्तितः ॥

मध्वादिभ्यस्तथैवेष्टो रसादिभ्यस्तथैव हि ।
सिध्मादिभ्यश्च संप्रोक्तस्तदस्त्यर्थे वलादितः ॥

हेतुभूतादागतेऽर्थे मयट् स्यादिति कीर्तितम् ।
नित्यं वृद्धशरादिभ्यो विकारेऽवयवेऽपि वा ॥

गोः पुरीषे च पिष्टात्तु विकारे मयडिष्यते ।
असंज्ञायां तिलयवात् प्रचुरार्थेऽपि स स्मृतः ॥

भागस्य मूल्ये क्रेये वा संख्यायाश्च विधीयते ।
भवेद्दुग्धार्थकत्वे तु मरीसच्प्रत्ययो मतः ॥

प्रमाणे मात्रजिष्टो हि पृष्ठाद् यश्च समूहके ।
पाशादिभ्यो वलादेस्तु तदस्त्यादिचतुष्टये ॥

जाताद्यर्थे ग्रामशब्दात् साध्वर्थे तु सभापदात् ।
समानतीर्थाद् वास्यर्थे शयिते सोदरादपि ॥

स्याद् सगर्भसयूथाच्च भवेऽर्थे सनुतादपि ।
अर्हत्यर्थे तु दण्डादेः स्तवाच्चेति तु माधवः ॥

रावे कर्मणि चाप्यर्थे सख्युर्यः परिकीर्तितः ।

सखिदूतवणिग्भ्यस्तु भावे कर्मणि चेष्यते ॥

शाखादिभ्य इवार्थे च यप्रत्यय उदाहृतः ।
कूपवारादभिजने यङ्प्रत्यय उदाहृतः ॥

पुरोहितादिवर्गाच्च पत्यन्ताद् भावकर्मणोः ।
गर्गादिभ्यस्तु गोत्रे यञ् वतण्डादपि च स्मृतः ॥

मधुबभ्रवोश्च स ज्ञेयस्तौ चेद् ब्राह्मणकौशिकौ ।
कपिबोधादाङ्गिरसे सर्वे देवाद् वहिष्पदात् ॥

समूहार्थे तु केदाराद् गणिकायास्तथैव हि ।
केशाच्चैव तथा प्रोक्तो द्वीपादनुसमुद्रगात् ॥

कंसीयाच्च विकारार्थे स्वार्थे त्वभिजिदादितः ।
अपत्ये श्वशुराद्यत् स्यात् कुलादपि च केवलात् ॥

यति जातिमहः कार्यो राजन्शब्दादितीरितम् ।
गोरपत्यादिवचने यत्प्रत्यय उदीरितः ॥

संस्कृते शूलशब्दाच्च तथैवोखाच्च कीर्तितः ।
वाय्वृतुप्रभृतिभ्यश्च देवतार्थे तु कीर्तितः ॥

समूहे ब्राह्मणादिभ्यो भवार्थे त्वर्धशब्दतः ।
धुमागपागुदग्भ्यश्च प्रतीचोऽपि भवार्थके ॥

परादिपूर्वादर्धाच्च दिगादिभ्यस्तथैव हि ।
अवरार्धपदात्तु स्यात् स्वार्थे चापीत्युदीरितम् ॥

शब्दादन्यत्र वर्गान्ताच्छरीरावयवाच्च हि ।
व्याख्याने छन्दसश्चापि सुरसश्चैकदिग्भवे ॥

विद्यासम्बन्धवचनाद् योनिसम्बन्धवाचकात् ।
आगतेऽर्थे पितुर्यत् स्याद् विकारे गोपयोद्रुतः ॥

वहत्यर्थे रथयुगात् प्रासङ्गाच्च धुरोऽपि च ।
जनीशब्दाच्च विज्ञेयो विध्यत्यर्थेऽपि कीर्तितः ॥

लब्धार्थे धनशब्दाच्च गणशब्दाच्च वै स्मृतः ।

वशं गते वशाच्चापि दर्शनार्हे पदात् तथा ॥

अवश्योत्पाटनीयार्थे मूलशब्दाद् विधीयते ।
नावादिभ्यः क्रमात् तार्यार्थेषु च विधीयते ॥

अनपेते तु धर्माच्च पथ्यर्थन्यायतस्तथा ।
इच्छार्थोच्छन्दसश्चापि ह्यात्मार्थादुरसस्तथा ॥

निर्मिते प्रत्ययो ज्ञेयः प्रियार्थे हृदयाच सः ।
मताज्जनाद्धलाच्चापि करणे जल्पकर्षयोः ॥

समानतीर्थवास्यर्थे साध्वर्थे च प्रकीर्तितः ।
भवार्थेऽप्यात्तु शयिते समानोदरशब्दतः ॥

मासतन्वोस्तु मत्वर्थे शरीरावयवाद्धिते ।
खलादेश्चापि तद्वत् स्यात् क्रीताद्यर्थे शताच सः ॥

उवर्णान्ताद् गवादेश्च हिताद्यर्थचतुष्टये ।
तद्वद्धविरपूपेभ्यो यत्प्रत्यय इतीरितम् ॥

क्रीते तु पणपादाच तथा माषशतादपि ।
द्विगोरध्यर्धपूर्वाच्च शाणान्तात्तु विभाषया ॥

गोशब्दाच्च व्यचश्चैव तथा सङ्ख्यादिवर्जितात् ।
निमित्तभूतसंयोगे उत्पाते वा प्रकीर्तितः ॥

पुत्राच्च तद्वदेव स्यात् दीयतेऽर्थे तु भागतः ।
नित्यमर्हति चार्थे तु शीर्षच्छेदाद् विधीयते ॥

मासाच्च वयसि घोत्ये भूतार्थे तु यदिष्यते ।
तेन दीयत इत्यर्थे हस्ताच्चापि विधीयते ॥

सम्पादिन्यर्थके तु स्यात् कर्मवेषपदादपि ।
योगाच्च प्रभवत्यर्थे मासे कालात् तथा स्मृतः ॥

धान्यानां भवने क्षेत्रे यवादिभ्योऽपि कीर्तितः ।
अध्वनो गच्छतो चार्थे तादर्थ्ये देवतान्ततः ॥

पादार्घाभ्यां च तादर्थ्ये यत्प्रत्यय इतीरितम् ।

भावे कर्मणि चाप्यर्थे स्तेनाद् यन् प्रत्ययो मतः ॥

मासान्ताद् वयसि बोध्ये द्विगोर्यप्प्रत्ययो भवेत् ।
आहतत्वप्रशस्तत्वविशिष्टाच्चापि रूपतः ॥

कंशंभ्यां चापि मत्वर्थे यस्प्रत्यय उदाहृतः ।
ऊर्णाशब्दात्तु मत्वर्थे युस्प्रत्यय इतीरितम् ॥

कंशंभ्यामपि तद्वत् स्यात् तथाहंशुभमोरपि ।
तदस्त्यादिचतुष्केऽर्थे त्वश्मादेस्तु र ईरितः ॥

मत्वर्थे तुषशब्दाच्च सुषिमुष्कमघोरपि ।
ह्रस्वार्थे तु कुटीशब्दाच्छमीशुण्डादपि स्मृतः ॥

अमीधः शरणे रण् स्याद् भत्वं चास्य प्रकीर्तितम् ।
रूपप् च प्रत्ययः प्रोक्तः प्रशंसायां च कुत्सने ॥

हेतोश्चैव नृनाम्नश्च रूप्यः स्यादागतेऽर्थके ।
षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यप्रत्यय इष्यते ॥

सप्तम्यन्तादिदंशब्दात् कालेऽर्थे र्हिल् विधीयते ।
तथैवोक्तं किमादेस्तु कालेऽनद्यतनेऽपि च ॥

प्राणिस्थादात मत्त्यर्थे लच्प्रत्यय इतीरितम् ।
क्षुद्रजन्तूपतापेभ्यः सिध्मादिभ्यस्तथैव च ॥

वत्सांसाभ्यां कामवति बलवत्यपि कीर्तितम् ।
मत्वर्थे चापि केशाद् वो ततोऽन्यत्रापि दृश्यते ॥

गाण्डीशब्दादजगवात् संज्ञायां च विधीयते ।
तुल्यत्वे तु क्रियायाश्च वतिप्रत्यय ईरितः ॥

गुणादिभिश्च तुल्यत्व इवार्थे तत्र तस्य च ।
अर्हत्वेऽपि क्रियायाश्च वतिप्रत्यय ईरितः ॥

वतुप् स्याद् यत्तदेतेभ्यः परिमाण इतीरितम् ।
माने वाच्ये द्रुशब्दाच्च वयप्रत्यय ईरितः ॥

देशे वाच्ये शिलायास्तु वलच्प्रत्यय इष्यते ।

मत्वथ रजआदिभ्यो नाम्नि दन्तशिखादपि ॥

मौरिक्यादिपदाद् देशे विधल्प्रत्ययश्च ईरितः ।
विनिस्तपःसहस्राभ्यां मत्वर्थे तु विधीयते ॥

मायामेधास्रजश्चापि तथासन्ताच्च कीर्तितः ।
कन्थायास्तु वुगिष्टो हि सा चेद् वर्णुसमीपगा ॥

नीतौ चाप्यनुकम्पायामुपादेर्वुच् प्रकीर्तितः ।
गोत्रादीनां समूहार्थे वुञ्प्रत्यय उदाहृतः ॥

केदाराच्च तथा दृष्टं सामेत्यर्थे प्रकीर्तितः ।
राजन्यादेस्तु नियते देशेऽर्थे च समीरितः ॥

अदेशार्थादपि भवेद् विदेहानर्तशब्दतः ।
वुञ् स्यादरीहणादिभ्यस्तदस्त्यादिचतुष्टये ॥

जातार्थेऽपि तथा प्रोक्तः प्रत्ययो धन्वयोपधात् ।
तथैव हि प्रस्थपुरवहान्ताच्च विधीयते ॥

रोपधादपि चेदन्ताद् वृद्धाच्च प्राङ्मते मतः ।
वृद्धाज्जनपदाच्चापि मतो जनपदावधेः ॥

अवृद्धादपि सम्प्रोक्तो बहुत्वविषयः स चेत् ।
कच्छादेरुत्तरपदाद् धूमादिभ्यस्तथैव च ॥

कुरुयुगन्धरशब्दात्तु विकल्पेन विधीयते ।
प्राचीण्ये कुत्सने योत्ये नगरादपि चेष्यते ॥

पथ्यध्यायविहारार्थे न्यायहस्तिनरार्थके ।
गोमयार्थेऽपि च तथा वुञरण्यादितीरितम् ॥

कच्छादेस्तु मनुष्ये च वाच्ये तत्स्थे च वुञ् स्मृतः
जातार्थे गोयवाग्वोश्च साल्वादप्यपदातितः ॥

संज्ञायां शरदोऽपि स्यादिति सूत्रे प्रदर्शितम् ।
देये ग्रीष्माद् वसन्ताच्चाप्याश्वयुज्यास्तथैव च ॥

[illegible] देयेऽर्थेऽपि प्रकीर्तितः ।

स्यादाग्रहायणीशब्दात् संवत्सरपदादपि ॥

विद्यासम्बन्धवचनाद् योनिसम्बन्धवाचकात् ।
आगतेऽर्थे च भक्त्यर्थे स्याद् गोत्रक्षत्रियाख्यतः ॥

कुलालादेः कृतेऽर्थे तु नाम्नि स्यादित्युदीरितम् ।
वुञ् गोत्रचरणात् तस्येदमर्थे च प्रकीर्तितः ॥

शाकलादपि सम्प्रोक्तस्तदस्त्यादिचतुष्टये ।
उष्ट्राद् विकारे श्लाघादौ चरणात् गोत्रतश्च हि ॥

भावे कर्मणि चाप्यर्थे गुरूपोत्तमयोपधात् ।
तथा द्वन्द्वाच्च सम्प्रोक्तो मनोज्ञादिभ्य एव च ॥

अधीते वेद इत्यर्थे क्रमादिभ्यस्तु वुन् मतः ।
पूर्वाह्णादिपदाज्जाते मत्वर्थे गोपदादितः ॥

तत्र देयमितीहार्थे कलाप्यादिपदात् तथा ।
भक्त्यर्थे वासुदेवाच्च तथैवार्जुनशब्दतः ॥

वैरे मैथुनिकायां च द्वन्द्वादेव विधीयते ।
पादान्तस्य शतान्तस्य सङ्ख्यादेः स्वार्थ इष्यते ॥

अवीप्सायां च वीप्सायां चोत्यायां दण्डदानयोः ।
भ्रातुर्व्यत् स्यादपत्यार्थे व्यन् सपत्ने तु कीर्तितः ॥

लोमादिभ्यस्तु मत्वर्थे प्रोक्तः शप्रत्ययः किल ।
बह्वल्पार्थात्तु शस् प्रोक्तः कारकाच्च विभाषया ॥

शङ्कटच्छालचौ स्वार्थे विस्तृतार्थात्तु वेः स्मृतः ।
भवने क्षेत्र इक्ष्वादेर्भवेच्छाकटशाकिनौ ॥

पदत्वे तु पदृशवच् प्रोक्तः पशुनामभ्य एव हि ।
अधीते वेद इत्यर्थे शतादेश्च पथः पिकन् ॥

गच्छत्यर्थे पथिन्शब्दात् ष्कन्प्रत्यय ईरितम् ।
कासूशब्दाच्च गोण्याश्च ष्टरच् ह्रस्वे प्रकीर्तितः ॥

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे च तथा स्मृतः ।

गर्ह्यदेयार्थवचनात् ठच् दशैकादशात् स्मृतः ।
पौरोडाशपुरोडाशात् ष्ठन् व्याख्याने भवेऽपि च ॥

नावो द्व्यज्भ्यस्तरत्यर्थे भस्त्रादेर्हरतौ मतः ।
गर्ह्यदेयार्थवचनात् कुसीदपदतोऽपि च ॥

पण्यार्थे किसरादिभ्यो विकल्पेन शलालुनः ।
वापार्थे पात्रशब्दाच्च ष्ठन्प्रत्यय उदाहृतः ॥

सम्भवत्यवहरति पचतीत्यर्थकेऽपि च ।
आढकाचितपात्रेभ्यो विकल्पेन समीरितः ॥

आकर्षात्तु चरत्यर्थे ष्ठल्प्रत्यय उदाहृतः ।
वसत्यर्थे त्वावसथात् तथैव समुदाहृतः ॥

कापिशीदेशजातेऽर्थे कापिश्याः ष्फक् प्रकीर्तितः ।
तथा बाह्ल्युर्दिपर्दिभ्यः ष्फक् स्यादिति समीरितम् ॥

अणिञन्तात् स्त्रियां ष्यङ् स्यादार्षगोत्रविवर्जितात् ।
गुरूपोत्तमशब्दाच्च गोत्रापत्ये ष्यङीरितः ॥

दैवयज्ञादिशब्दाच्च तथैवोदाहृतं स्त्रियाम् ।
तथैव गोत्रावयवात् कौड्यादिभ्योऽपि कीर्तितः ॥

भावे वर्णदृढादिभ्यः ष्यञ् स्यादिति समीरितम् ।
भावे कर्मणि चाप्यर्थे गुणाख्यब्राह्मणादितः ॥

विकारेऽवयवे चापि शम्याः ष्लञ् च विधीयते ।
प्रशंसायां मृदः सः स्यादस्त्यामर्थे तृणादितः ॥

कार्त्स्न्ये द्योत्ये च्विविषये सातिर्वा स्यादितीरितम् ।
सम्पत्कृभ्वस्तिभिर्योगे व्याप्तौ सातिः प्रकीर्तितः ॥

कृभ्वस्तिभिः सम्पदा च योगेऽधीनार्थकेऽपि च ।
क्रियाभ्यावृत्तिगणने द्वित्रिभ्यां चतुरश्च सुच् ॥

प्रशंसायां मृदः स्नः स्याद् दुग्धे सोढ अवेः स्मृतः ।
पुंनस्तु स्नन्निर्देशो हि धान्यानां भवनात् पुरा ॥

सप्तम्यन्तादिदंशब्दात् हप्रत्यय इतीरितम् ।

इति ।

एतादृशस्यास्य प्रक्रियासर्वस्वस्य कर्ता मातृदत्ततनूजो नारायणभट्टपाद इति, केरलदेशस्थनिलानद्युत्तरवर्त्तिपरिनवग्रामवास्तव्य इति च

> भूखण्डे केरलाख्ये सरितमिह निलामुत्तरेणैव नावा-
> क्षेत्रे गव्यूतिमात्रे पुनरुपरिनवग्रामनाम्नि स्वधाम्नि ।
> धर्मिष्ठाद् भट्टतन्त्राद्यखिलमतपटोर्मातृदत्ताद् द्विजेन्द्रा-
> ज्जातो नारायणाख्यो निरवहदतुलां देवनारायणाज्ञाम् ॥

पद्यादस्मात् स्फुटमवगम्यते । अयं च प्रवेशकाख्यव्याकरणग्रन्थनिर्मातुरच्युतमहाशयस्य शिष्य इति १७२३२०१ कलिदिने प्रक्रियासर्वस्वं परिसमापितमिति च ।

> अयमच्युतगुरुकृपया पाणिनिकात्यायनादिकारुण्यात् ।
> यत्नः फलप्रसूः स्यात् कृतरागरसोऽद्य शब्दमार्गजुषाम् ॥

इति ग्रन्थकर्तृविरचितपद्यादस्मात् प्रतीयते, कविमिममधिकृत्य विस्तरतो बहुत्र वर्णितत्वान्नेह वितन्यते ।

अथ कविकृतमधिकृत्य किञ्चिद् विचार्यते । कविरयं सूत्रोक्तगोत्रावयवसाम्प्रतिकाद्यलक्षणपदानां निर्वचनं सुगमया रीत्या प्रतिपादयतीत्येतदपरोक्षमथस्तनपद्यैः ।

> 'स्वतो न गोत्रशब्दा ये कुलाख्या गोत्रवन्मताः ।
>
> ते गोत्रावयवा नाम ये केचिन्मुखरादयः (पु० २२)
> उत्कृष्टनीचयोर्मध्ये भवः साम्प्रतिको मतः (पु० ७३)
>
> अङ्गो नाम स्वसम्बन्धिगवादौ कृतमङ्कनम् ।
> स्वस्यैवाचारविद्यादिचिह्नं लक्षणमुच्यते ॥ (पु० १७)

किञ्च 'पुरुषाद्वितवधविकारावयवसमूहतेनकृतेषु ढञ् वाच्यः' इति वार्तिकस्योदाहरणं पद्येनैकेन स्फुटमवगमयति । यथा —

नौ पौरुषेयमयमिच्छति पौरुषेये
सक्तो वधे पिशितमत्ति च पौरुषेयम् ।
द्राक् पौरुषेयगरुमिव च पौरुषेयै-
र्जेय्यो विनिन्दति च वाचमपौरुषेयीम् ॥ ( पु० १२४)

इति । किञ्च मतान्तरनिरूपणेन केषाञ्चित् पदानामसाधुत्वमुक्त्वा प्रकारान्तरेण साधुत्वमपि समर्थयति । यथा —

कार्तिकेयो विवस्वानित्यस्ति कार्तिकमासजे ।
तत्र कोलाह्वमि प्राप्ते ढो मृग्य इति वामनः ॥
शार्वरं तम इत्याद्यप्यसाध्वेवेति सोऽब्रवीत् ।
वस्तुतश्चेत् कार्तिकिको भानुः शार्वरिकं तमः ॥
एवं पार्विक इत्येव पार्वणश्चन्द्र इत्यसत् ।
स्याद् वा चातुर्दशं रक्ष इतिवच्छेष इत्यणि ॥ (पु० ७४)

इति । क्वचिद् वृत्तिकारमतमसम्मन्यमान आह । यथा वा —

यदृच्छास्य काकस्य पतत्तालस्य चान्वयः ॥
प्रकृत्यर्थोऽत्र तत्तुल्यं काकतालीयमुच्यते ।
एवं प्रयोगानुगुणं दण्डनाथोक्तमीरितम् ॥
एष्विवार्थद्वयं वृत्ताविष्टं क्लिष्टतरं तु तत् । (पु० २००, २०१)

"समासाच्च तद्विषयादि"ति सूत्रे तद्विषयादित्यस्येवार्थविषयादित्यर्थो वृत्तिकारेण वर्ण्यते । अनेन तु तद्विषयादित्यस्य तद्धितार्थविषयादित्यर्थो वर्ण्यते । एवेन वृत्तिकारमतं स्वस्यासम्मतं प्रतिभाति । किञ्च —

मध्यशब्दस्य मान्तत्वं स्याद् दिनन् प्रत्ययस्तथा ।
मध्यन्दिनाः प्रगायन्ति सदोमध्यमवा इमे ॥ (पु० ८४)

इति प्रक्रियासर्वस्वकारिकानुगुणमेव ग्रन्थालये सङ्गृहीतमातृकापाठोऽपि वर्तते । यथा —

मध्यो मध्यं दिनन् चास्मात् । मध्यशब्दोऽयं मध्यम्भावमापद्यते दिनन् चास्मात् प्रत्ययो भवतीति वक्तव्यम् । 'मध्यन्दिनं प्रगायति' इत्यन्तः-पूर्वपदाद्यत्र् इति सूत्रे भाष्यम् ।

मुद्रितभाष्यपाठस्तु — 'मध्यो मध्यं दिनण् चास्मात् । मध्य-शब्दोऽयं मध्यम्भावमापद्यते दिनण् चास्मात् प्रत्ययो भवतीति वक्तव्यम् । माध्यन्दिन उपगायति' इति । एवं विभिन्नयोरनयोः पाठयोः कतरस्य ज्याय-स्त्वमिति सुधियो विभावयन्तु ।

कविनानेन स्मृता ग्रन्थास्तावत् — कौमुदी, टीकासर्वस्वम्, न्यासः, भाष्यम्, मुरारिपञ्जिका, वृत्तिः, वेणीसंहारः, शृङ्गारः, सुभद्राहरणम् ।

ग्रन्थकर्तारस्तावत् — हरः, क्षीरस्वामी, भोजः, सर्वानन्दः, माधवः, रामः, दण्डनाथः, भट्टिः, वामनः, शङ्करः, कैयटः, भोजः ।

ग्रन्थेऽस्मिन् भोजकृतसरस्वतीकण्ठाभरणसूत्राणां प्रायेण स्मरणात् तत्रास्य कवेरन्यादृशी बहुमतिरिति प्रतिभाति ।

सरस्वतीकण्ठाभरणगततद्धितखण्डमपि समाप्तप्रायं वर्तते । तच्चा-चिराद् ग्रन्थालयादस्माद् प्राकाश्यं नीयेत ।

मद्रनगरवासिश्रीकुञ्जन् राजमहाशयैः प्रसाधिते तद्धितखण्डे आपत्य-गणीयत्वेनात्र निर्दिष्टानां सरस्वतीकण्ठाभरणसूत्राणां तद्वृत्तीनां च निवेशनं न दृश्यते । तत्र च कारणं तत्प्रसाधनोपयोगिप्रक्रियासर्वस्वमातृकास्वनुपलम्भ एवेति मन्ये । अत्रत्यमातृकासु त्वेकां विहायान्यासु सर्वास्वपि दृश्यते च । युक्तं चास्यात्रैव निवेशनम् ।

'वृत्तौ चारु न रूपसिद्धिकथनम्'

इत्यादिपद्यस्वारस्यात् । उभयोः पाठभेदश्च तत्तत्पुटेषु निवेशितः । नवीनां रीतिमाश्रित्य प्रसाधितोऽयं मद्रनगरीयतद्धितखण्डो नवीनां रीतिमाश्रित्य प्रसाधयिषितस्यास्यानुक्रमण्यादिनिवेशने भृशमुपकार आसीत् । अयं च तद्धितखण्डः प्रसाधनाय ११११७ कोळम्बाब्दे मुद्रापणाय प्रेषितः । परन्तु इदानीमेवास्य मुद्रणं सम्पूर्णमासीत् ।

मुद्रितपाठापेक्षया विभिन्नानां सूत्रपाठानामनुक्रमणी च अध्येतृसौकर्याय विलिख्यते —

| पृष्ठम् | पङ्क्तिः | प्रक्रियासर्वस्वपाठः | काशिकादिपाठः |
|---|---|---|---|
| ६४ | ९ | घुप्रागवागुदक् | घुप्रागपागुदक् |
| ६८ | २४ | कच्छाग्निवक्त्रवर्तौ | कच्छाग्निवक्त्रगर्तौ |
| ७१ | २२ | कन्थाफलद् | कन्थापलद् |
| ७७ | ६ | सिन्धववकराभ्यां | सिन्धवपकराभ्यां |
| ८९ | १४ | आयुधजीविभ्यश्छः पर्वतात्. | आयु............पर्वते |
| ,, | १८ | सिन्धुतक्षशिलादिभ्यामणञौ | सिन्धु......दिभ्योऽमणञौ |
| ११६ | ८ | धुरो यड्ढकञौ | धुरो यड्ढकौ |
| ,, | १० | न भकुर्छुराम् | न भकुर्च्छुराम् (प्रक्रियाकौमुदी) |
| ११७ | ६ | संज्ञायां जन्याः | संज्ञायां जन्या |
| १२४ | १२ | पुरुषाद्धितवध....... | पुरुषाद्वध... (भाष्यम्) |
| १३१ | २३ | वातपित्तश्लेष्मसन्निपातेभ्यः .... | वातपित्तश्लेष्मभ्यः (वा०) |
| १३२ | १९ | लोकसर्वलोकाभ्यां ठञ् | लोकसर्वलोकाट्ठञ् |
| १३६ | १५ | विरागस्य विरङ्गादेशश्च | विरागविरङ्गं च |
| ,, | १९ | दण्डादिभ्यो यः | दण्डादिभ्यो यत् |
| १३८ | १० | अजगच्छुकुवारिजङ्गलस्थलकान्ता-<br>रपूर्वाच्च पथाट्टञिष्टः | वारिजङ्गल...... कान्तारपूर्व-<br>पदादुपसङ्ख्यानम् |
| १४४ | ५ | ऐकागारिकट् चोरे | ऐकागारिकट् चौरे |
| ,, | ८ | आकालिकडाद्यन्तवचने | आकालाट्ठञ्श्च |
| १५२ | १८ | न नञ्पूर्वात् ... वुध | न नञ्पूर्वात्......युध |
| १६५ | २० | आकपादिभ्यः | आकर्षादिभ्यः |
| १६८ | ९ | तदस्मिन्नन्नं प्राये संज्ञायां | तदस्मिन्नन्नं प्रायेण संज्ञायाम् |
| ,, | १३ | कुल्माषादञ् | कुल्माषादञ् |
| १७४ | १८ | प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः | प्रज्ञाश्रद्धार्चाभ्यो णः |
| १८१ | २ | एतदोऽश् | एतदोऽन् |
| २०३ | ,, | पर्श्वादियौधेयादिभ्यामणञौ | पर्श्वादियौधेयादिभ्योऽणञौ |
| २१२ | ७ | अमुततद्भावे कृ .......ञ्विः | कृ... .......च्विः |

एतत्प्रसाधनायावसरोचितं समुचितमुपदेशं कृतवत्सु मीमांसकरत्न, मीमांसाविशारद वि. ए. रामस्वामिशास्त्रिमहाशयेष्वकैतवां कृतज्ञतां प्रकटयन्निदं महाजनसमक्षमवतारयामि ।

एन्. रामशास्त्री

---

# विषयानुक्रमणी ।

## शुद्धिपत्रिका ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २१ | ४. १. १४. | ४. १. ९४. |
| ५ | १० | ५. १. ९८. | ४. १. ९८. |
| ,, | १६ | व्रघ्नायन्यः | व्राघ्नायन्यः |
| ६ | २९ | जामदग्न्यो | जामदग्नो |
| ९ | ७ | ठको | ढको |
| १२ | २५ | पैतृष्वस्रीयः | पैतृष्वस्रीयः |
| १५ | ३ | ठक् | ढक् |
| १६ | १९ | यनिः । अत्रापि | यनिः । ऐदमानयनिः अत्रापि |
| १८ | २२ | सौवीराः | सुवीराः |
| २१ | १५ | मोतमाः | गोतमाः |
| २३ | ५ | सूताद्यू | सूताद्यु |
| ,, | २५ | सोम्यः | सौम्यः |
| २४ | २७ | स्त्रियोऽप | स्त्रिया अप |
| २५ | १२ | विकार | विकर |
| ,, | १७ | ऐद्राव | ऐन्द्राव |
| ३६ | १६ | ढक् | ढञ् |
| ,, | १७ | वश्रेयः | वैश्रेयः |
| ३९ | २६ | द्रव्यञ् | यान् |
| ४७ | १२ | तद्वान्मासो | तद्वन्मा' |
| ५२ | १५ | क्षुद्रग | क्षुद्रक |
| ,, | १८ | धर्मे | धर्म्यं |
| ५४ | ६ | आश्रीयं | अश्नीरं |
| ५४ | २२ | सास्या | सास्यां |
| ५५ | १५ | वेदं | वेद |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५५ | २४ | वार्ति | वार्तिं |
| ५७ | १४ | ४. २० ७४. | ४. २. ६७. |
| ५९ | १६ | काम्बिल्यः | काम्पिल्यः |
| ,, | १७ | प्रगादि | प्रगदिना |
| ६१ | ७ | ६. ३. ११७. | ६. ३. ११९. |
| ,, | १० | ८. २. ७. | ८. २. ९. |
| ६३ | ४,५ | खर्वौ | घखौ |
| ६६ | ७ | कण्वस्येदं | काण्व्यस्येदं |
| ,, | २१ | शौवदंष्ट्रः | शौवादंष्ट्रः |
| ७१ | २५ | दाक्षमा | दाक्षिमा |
| ७६ | १९ | आर्द्रकः | आर्द्रकः |
| ८२ | २ | मेध्यम् | मेध्यम् |
| ,, | ९ | संज्ञायम | संज्ञायाम् |
| ९१ | ११ | खाच्छ | खाच्छण् |
| ९९ | १६ | ओर् | ओरञ् |
| १०२ | २० | ४. १. १६८. | ४. १. १६४. |
| १२६ | २६ | मौद्रीकं | मौद्रिकं |
| १४० | १८ | स्तस्य | सादस्य |
| १४७ | १७ | क्रशिमा । आ | क्रशिमा । आर्स्यं, अशिमा । आ |
| १४८ | २५ | द्रुभाव्यं | द्वैभाव्यं |
| १५१ | १७ | युवादिभ्यो | युवादिभ्यो |
| १५९ | ८ | पशुनामभ्य- | पशुनामभ्यः |
| ,, | २० | भवनाः | भवना- |
| १६० | १५ | ५. २. ३४. | ५. २. ३५. |
| १६२ | २ | पुरुषहस्तिभ्यामप् | पुरुषहस्तिभ्यामण् |
| १७१ | १५ | इति वत्सम् | इति वत्सम् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७१ | ४ | पर्णिलः ना | पर्णिलः (पांसुलः भोसलः) ना |
| १७४ | १९ | प्रश्न श्रद्धा | प्रशाश्रद्धा |
| ,, | २२ | ९. १. १०२. | ५. १. १०२. |
| १७६ | २६ | दीर्घे | दीर्घः |
| १८३ | ४ | भदस् तस | भदस् तस् |

॥ श्रीः ॥

श्रीनारायणभट्टप्रणीतं

# प्रक्रियासर्वस्वम् ।

(तृतीयो भागः)

## ङ्याप् प्रातिपदिकात् (४. १. १)

इतः परं ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे प्रत्यया उच्यन्ते ॥

## तद्धिताः (४. १. ७६)

इत ऊर्ध्वं प्रत्ययास्तद्धिताख्याः ॥

## प्राग्दीव्यतोऽण् (४. १. ८३)

तेन दीव्यतीत्यतः प्राग्येष्वर्थेषु सामान्येनाण् स्यात् ।

अपत्यं रक्तयुक्ते च दृष्टं परिवृतोद्धृते ।
संस्कृतं पौर्णमासी च देवताव्यूढनीवृतः ॥
आदिः प्रयोजनं योद्धा तथा प्रहरणं क्रिया ।
अधीते वेदास्तिनिर्वृत्तावासादूरसम्भवाः ॥
शेषो जातः कृतो लब्धः क्रीतः कुशल इत्यपि ।
अनित्यभवसम्भूतौ साधुः पुष्यति पच्यते ॥
उप्तं देयं रौति सोढं भवो व्याख्यान आगतः ।
प्रभवत्येतिनिष्क्रामत्यधिकृत्यकृतस्तथा ॥
निवासोऽभिजनो भक्तिः प्रकर्षेणोक्तमेकदिक् ।
उपज्ञातः कृत इदं विकारोऽवयवश्च ते ॥

इह समासादीनामर्थविभजनं विग्रहः । उपगोरपत्यमिति विग्रहे—

## तस्यापत्यम् (४. १. ९२)

तस्येति षष्ठ्यन्तादपत्यमित्यर्थेऽण् स्यात् ॥

G. P. T. 1490. 500. 27.3.1117.
B

समर्थानां प्रथमाद्वा (४. १. ८२)

तद्धिताः सम्बन्धार्थयोर्द्वयोः सतोः सूत्रे प्रथमानिर्दिष्टादेव स्युः विकल्पिताश्च। तेन षष्ठ्यन्तात् प्रत्ययः। नापत्यात्। उपगु ङस् अण्। तद्धितान्तत्वेन प्रातिपदिकत्वात्सुब्लोपः। णित्त्वात् 'तद्धितेष्वचामादेः' (७. २. ११७) इत्यादिवृद्धिः। औपगु अ।

यचि भम् (१. ४. १८)

यादावजादौ च सर्वनामस्थानवर्जिते स्वादिप्रत्यये परे पूर्वं भसंज्ञम्। भस्येत्यधिकारे।

ओर्गुणः (६. ४. १४६)

उवर्णान्तस्य भस्य तद्धिते परे गुणः स्यात्। अवादेशः। औपगवः। एवं भानवः। ओर्गुणस्य संज्ञापूर्वत्वेनानित्यत्वात् स्वायम्भुवः। क्विबन्ता धातुत्वं न जहतीति भुव उवङ्। समर्थानां प्रथमाद्वेत्यत्र समर्थानामित्युक्तिर्वेत्रमुपगोरपत्यमन्यस्येत्यत्रौपगव इत्यभावार्थी। विकल्पवशादुपगोरपत्यमिति वाक्यम्, उपग्वपत्यमिति समासोऽपि स्यात्। मेधाविनोऽपत्यमित्यण् मेधाविन् अ।

नस्तद्धिते (६. ४. १४४)

नान्तस्य भस्य तद्धिते परे टिलोपः स्यात्। मैधावः॥

गाथिविदथिकेशिपणिगणिनश्च (६. ४. १६५)

एतेऽणि परे प्रकृत्या स्युः। टिलोपो नेत्यर्थः। गाथिपुत्रो गाथिनः। वैदथिनः। कैशिनः। पाणिनः। गाणिनः॥

संयोगादिश्च (६. ४. १६६)

संयोगादिरिन् अणि प्रकृत्या स्यात्। वज्रिणः पुत्रो वाज्रिणः॥

अन् (६. ४. १६७)

अणि सर्वत्र अन् प्रकृत्या स्यात्। राजपुत्रो राजनः। याज्वनः॥

न मपूर्वोऽपत्येऽवर्मणः (६. ४. १७०)

वर्मच्छन्दादन्यत्र मपूर्वोऽन् अपत्यार्थेऽणि परे प्रकृत्या न स्यात्। सुषाम्नोऽपत्यं सौषामः। वर्मणस्तु चाक्रवर्मणः। वा हितनाम्न इति वाच्यम्। हैतनामः हैतनामनः।

ब्राह्मोऽजातौ (६. ४. १७१)

ब्रह्मणस्त्वाणि सर्वत्र टिलोपोऽयं निपात्यते।
ब्रह्मपुत्रऋषिर्ब्राह्मो जातौ तु ब्राह्मणा इमे॥
अनपत्ये तु जातावपि टिलोप इष्टः। ब्राह्मी ओषधिः॥

षपूर्वहन्धृतराज्ञामणि (६. ४. १३५)

षपूर्वस्यानो हन्शब्दस्य धृतराज्ञश्च सर्वत्राणि परे अल्लोपः स्यात्। उक्ष्णोऽपत्यम् औक्ष्णः। पौष्णः। हो हन्तेरिति कुत्वम्। वार्त्रघ्नः। नस्य श्चुत्वं धार्तराज्ञः। इति। अथौपगवस्यापत्यमित्यत्रापि पुनः प्रत्ययप्रसङ्गे॥

अपत्यं पौत्रप्रभृति गोत्रम् (४. १. १६२)

एको गोत्रे (४. १. ९३)

गोत्रेऽर्थे एक एव प्रत्ययः स्यात्। पूर्वोत्पन्नप्रत्यय एवास्ति, न प्रत्ययान्तरमित्यर्थः। तस्मादौपगवस्य पुत्रोऽप्यौपगव एव॥

जीवति तु वंश्ये युवा (४. १. १६३)

वंश्ये पित्रादौ जीवति पौत्रादेरपत्यं चतुर्थादि युवसंज्ञं न गोत्रसंज्ञम्॥

गोत्राद्यून्यस्त्रियाम् (४. १. ९४)

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्। स्त्रियां तु युवोक्तं न। इत्यौपगवादेव प्रत्ययः।

अत इञ् (४. १. ९५)

अदन्तात् तस्यापत्यमित्यर्थे इञ् स्यात्। यस्येति च (६-४-१४८) इत्यलोपः। औपगविः। उपगवादौ कस्मिंश्चिज्जीवति युवसंज्ञश्चतुर्थ एवमुच्यते। अस्त्रियामित्युक्तेरौपगवी स्त्रीति चतुर्थापत्येऽप्यणेव।

'टिड्ढाणञि'ति ङीप् । दक्षस्यापत्यमिति अत इञ् । दाक्षिः पुत्रः । पौत्रश्चैवम् । युवापत्ये तु—

यञिञोश्च (४. १. १०१)

गोत्रार्थयञिञन्ताद् यूनि फक् ॥

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् (७. १. २)

प्रत्ययादिभूतानां फादीनां क्रमाद् आयन् एय् ईन् ईय् इय् इत्यादेशाः स्युः । इति फस्यायनादेशः ।

किति च (७. २. ११८)

किति तद्धिते परेऽपि अङ्गस्यादेरचो वृद्धिः स्यात् । अत्र त्वाकारस्याद्यच्त्वान्न भेदः । दाक्षायणो युवा । 'गर्गादिभ्यो यञ्' (४-१-१०५) इति गोत्रे यञ् वक्ष्यते । ततो यूनि प्राग्वत् फक् । गर्गपुत्रो गार्गिः । तत्पुत्रो गार्ग्यः । तत्पुत्रो युवा गार्ग्यायणः ।

हरितादिभ्योऽञः (४. १. १००)

विदादिभ्यो गोत्रे अञ् वक्ष्यते । तदन्तर्गणत्वाद् गोत्रे अञन्तेभ्यो हरितादिभ्यो यूनि फक् स्यात् । हरितपुत्रो हारितिः । तत्पुत्रोऽपि हारितः । तत्पुत्रस्तु युवा हारितायनः । कर्तुरपत्यमित्यण् कार्त्रः तत्पुत्रोऽपि 'एको गोत्र' इति कार्त्रः । यूनि तु—

अणो द्व्यचः (४. १. १५६)

द्व्यचोऽणन्तादपत्यार्थे फिञ् स्यात् । फमात्रस्यायन्नादेशः । कार्त्रायणिर्युवा ।

भ्रातरि च ज्यायसि (४. १. १६४)

ज्येष्ठभ्रातरि जीवति कनीयान् युवसंज्ञः । पित्रादौ मृतेऽपि अग्रजे जीवति अनुजो गार्ग्यायणः स्यात् ॥

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति (४. १. १६५)

भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति जीवन्तश्चतुर्थादयो वा युवसंज्ञाः । पित्रादिष्वग्रजेष्वपि मृतेषु कस्मिंश्चित् कुलवृद्धे जीवति

स्वयं जीवंश्चतुर्थो गार्ग्यो गार्ग्यायणश्चोच्यते। 'वृद्धस्य च पूजायाम्' (वा ४.१.१६३) पौत्रो वृद्धः। तस्यापि पूजायां वा युवसंज्ञा स्यात्। गार्ग्यायणः खल्वयं गार्ग्यो वा। 'यूनश्च कुत्सायाम्'। (कुत्सायां यून) एव युवसंज्ञा वा स्यात्। पक्षे गोत्रता स्यादित्यर्थः। कुत्सितश्चेच्चतुर्थोऽपि गार्ग्य इत्याख्येयः, गार्ग्यायण इत्येव वा॥

वंश्यो ज्यायांश्च गुरुर्विवक्षयान्यस्तुतिस्त्वधीनतया।
निन्दाप्यनधीनेऽतो गुर्वायत्तो युवेति भोजनृपः॥

अथ गोत्रे प्रत्ययाः। कुञ्जस्यापत्यं कौञ्जिः। तस्यापत्ये तु—

### गोत्रे कुञ्जादिभ्यश्च्फञ् (५. १. ९८)

एभ्यो गोत्रापत्ये वाच्ये च्फञ् स्यात्। चकारो व्रातच्फञो-रित्युक्त्यर्थः। गोत्रे प्रत्ययोऽपि परमप्रकृतेः कुञ्जादेरेव। कौञ्जायनः॥

### व्रातच्फञोरस्त्रियाम् (५. ३. ११३)

भारादिजीविनः सङ्घा व्राताः। तद्वाचिभ्यः च्फञन्तेभ्यश्च स्वार्थेऽस्त्रियां ञ्यः स्यात्। कौञ्जायन्यः व्रध्नायन्यः। स्त्रियां तु कौञ्जायनीत्येव। अपत्यप्रत्ययान्तानां जातित्वाद् जातिङीषयम्॥

### ञ्यादयस्तद्राजाः (५. ३. ११९)

ञ्यादयः प्रत्ययास्तद्राजाख्याः॥

### तद्राजस्य बहुषु तेनैवास्त्रियाम् (२. ४. ६२)

तद्राजप्रत्ययस्य तेनैव कृते बहुत्वे सति स्त्रीलिङ्गादन्यत्र लुग् स्यात्। कौञ्जायन्यः कौञ्जायन्यौ कौञ्जायनाः। तेनैव कृते बहुत्व इत्युक्तेः प्रियकौञ्जायन्या इत्यत्रान्यपदार्थकृतं बहुत्वमिति ञ्यस्य लुक् न। एवं व्राध्नायन्य इत्यादि। अप्रसिद्धत्वाद् गणेषु सर्वोक्तिर्नेया। नडपुत्रो नाडिः। तत्पुत्रे तु—

### नडादिभ्यः फक् (४. १. ९९)

एभ्यो गोत्रे फक्। नाडायनः। मित्रस्य पौत्रादिर्मैत्रायणः। शाकटायनः। आश्वलस्य आश्वलायनः। यौगन्धरायणः। 'शलङ्कु-

क्रोष्ट्वोर्लोपश्च' शालङ्कायनः। क्रौष्टायनः। प्रसिद्धस्य गोत्रजे आमुष्या-यणः। अमुष्येति गणे पाठात् सुबलोपः। दण्डिनृहस्तिनोर्नान्तत्वा-ट्टिलोपे प्राप्ते 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिना-यनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' (६. ४. १७४)इति निपातनात् तदभावः।

पौत्रादिकार्यकारित्वात् पुत्रस्यापि हि गोत्रता।
क्वचिदारोप्यते द्वीपपुत्रो द्वैपायनस्ततः॥
द्वीपस्थः पराशरोऽत्र द्वीपः।

शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु (४. १. १०२)

एभ्यो गोत्रे भृग्वाद्यपत्येषु वाच्येषु फक् स्यात्। शरद्वत्पुत्रः शारद्वतः। तत्पुत्रो भृगुवंशजो दत्तपुत्रश्चेत् शारद्वतायनः। स्ववंशजश्चे-च्छारद्वत एव। एवं वात्स्यश्चेच्छौनकायनः। आग्रायणश्चेद्दार्भायणः। स्ववंशजे शौनकः दार्भिः। आद्ययोर्विदाद्यञ्। दर्भादत इञ्॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् (४. १. १०३)

एभ्यो गोत्रे वा फक् स्यात्। द्रोणपुत्रो द्रौणिः। तत्पुत्रो द्रौणा-यनः द्रौणिर्वा। एवं पर्वतजीवन्ताभ्यां च फगिञौ। चिरजीवित्वेन पौत्रादिवत्कार्यकृत्त्वाद् द्रौणायनोऽश्वत्थामेति पुत्रेऽपि॥

अनृष्यानन्तर्ये बिदादिभ्योऽञ् (४. १. १०४)

बिदादिभ्यो गोत्रे अञ् स्यात् तेष्वनृषिभ्यस्त्वनन्तरापत्ये। बिदपुत्रो बैदिः। तत्पुत्रो बैदः। आपस्तम्बपौत्र आपस्तम्बः। भारद्वा-जः। कौशिकः। काश्यपः। नडादित्वात् काश्यपायनोऽपि। एषु पुत्र-दुहितृननान्दृपुनर्भूनिषादाः अनृषयः। तेन पुत्रस्यानन्तरापत्ये पौत्रः। दौहित्रः। नानान्द्रः। पौनर्भवः। नैषादः। परस्त्रियाः परशवादेशश्च। नियोगायां शूद्रायां जातः परस्त्रीपुत्रत्वात् पारशवः॥

गर्गादिभ्यो यञ् (४. १. १०५)

गार्ग्यः। वात्स्यः। कात्यः। शाकल्यः। काण्व्यः। याज्ञव-ल्क्यः। मौद्गल्यः। शाण्डिल्यः। कौटल्यः। चाणक्यः। जामदग्न्यः। भरद्वा। पुत्रे तु जामदग्न्यो रामः। पाराशरो व्यास इत्यृष्यण्।

तयोर्यञ्प्रयोगस्तु, द्रौणायनवत् । एवमेव तार्क्ष्य इत्यपि पुत्रे यञ् । तृक्षः काश्यपः ॥

मधुबभ्र्वोर्ब्राह्मणकौशिकयोः (४. १. १०६)

क्रमाद् यञ् । मधुपौत्रो ब्राह्मणो माधव्यः । माधवोऽन्यः । कौशिकगोत्रादत्तश्चेत् बाभ्रव्यः । बाभ्रवोऽन्यः ॥

कपिबोधादाङ्गिरसे (४. १. १०७)

आङ्गिरसो दत्तश्चेत् काप्यः । बौध्यः । अन्यत्र 'इतश्चानिञः' (४-१-१२२) इति वक्ष्यमाणो ढक्, ढस्य एय् कापेयः । इञ् बौधिः ॥

वतण्डाच्च (४. १. १०८)

अस्मादप्याङ्गिरसे वाच्ये गोत्रे यञ् । वातण्ड्यः । अन्यत्र वातण्डो वातण्ड्य इति विकल्पः शिवादिगर्गादिपाठात् ॥

लुक् स्त्रियाम् (४. १. १०९)

अङ्गिरसः स्त्रियां वाच्यायां वतण्डाद् यञो लुक् स्यात् । वतण्डी शार्ङ्गरवादित्वान् ङीन् ॥

अश्वादिभ्यः फञ् (४. १. ११०)

एभ्यो गोत्रे फञ् । आश्वायनः । शाङ्खायनः । विशम्पस्य वैशम्पायनः ॥

भर्गात् त्रैगर्ते (४. १. १११)

भर्गपौत्रस्त्रैगर्तश्चेद् भार्गायणः । भार्गिरन्यः । अथापत्यमात्रे प्रत्ययाः । व्याघ्रस्यापत्यमित्यत इञ् ॥

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् (७. ३. ३)

पदान्ताभ्यां यकारवकाराभ्यां परस्याद्यचो वृद्धिर्न ताभ्यां पूर्वौ त्वैचावागमौ स्तः। व्याघ्र इत्यत्र वि इत्युपसर्गस्य सौ कृते पदत्वं, यणादेशेन यकारस्य पदान्तत्वं वैयाघ्रिः ॥

१. 'के' क. पाठः.

## द्वारादीनां च (७. ३. ४)

एषां प्राग्वदैजागमः स्यात्। दौवारपालिः। स्वस्यापत्यं सौविः॥

## स्वागतादीनां च (७. ३. ७)

एषामैजागमो न स्यात्। एषु स्वङ्गव्यङ्गव्यडानां स्वाङ्गिः। व्याङ्गिः। व्याडिः॥

## श्वादेरिञि (७. ३. ८)

श्वादेः शब्दस्येञि परे द्वारादित्वात् प्राप्त ऐच् न स्यात्। श्वदंष्ट्रस्यापत्यं श्वादंष्ट्रिः॥

वहीनरस्यादिवृद्धिप्राप्तावित्वमिहेष्यते।
इकारस्य पुनर्वृद्धिस्तेन वैहीनरिः सुतः॥

## बाह्वादिभ्यश्च (४. १. ९६)

एभ्योऽपत्यार्थ इञ् स्यात्। बाहविः। बाहोस्तदन्तादेवेति माधवः। सौबाहविः। सुमित्रासुतः सौमित्रिः। 'नस्तद्धित' (६-४-१४४) इति टिलोपः। आग्निशर्मिः। पञ्चानां सुतः पाञ्चिः। साप्तिः। आष्टिः। एवमौडुलोमिः। लोमान्तात् बहुष्वपत्येष्वप्रत्ययो वाच्यः। उडुलोम्नः पुत्रा बहव उडुलोमाः। अजादौ तद्धिते शिरसः शीर्षो वाच्यः। हस्तिशिरसः पुत्रो हास्तिशीर्षिः॥ पुष्करसद् इ, अनुदरत् इ,

## अनुशतिकादीनां च (७. ३. २०)

एषां वृद्धिहेतुतद्धिते परे उभयपदवृद्धिः स्यात्। पौष्करसादिः। आनुदारतिः॥

## सुधातुरकङ् च (४. १. ९७)

सुधातृशब्दस्येञ् स्यादकङ् चान्तादेशः। सौधातकिः। व्यासवरुडनिषादचण्डालबिम्बानां चेति[1]। व्यासस्य 'न य्वाभ्याम् —' इत्यैच्। वैयासकिः। वारुडकिरित्यादि। वरुडोऽन्त्यजातिः॥

1. [illegible]

## शिवादिभ्योऽण् (४. १. ११२)

एभ्योऽतइञादिबाधार्थमण् स्यात् । शिवपुत्रः शैवः । हैहयः । काकुत्स्थः । विश्रवसो विश्रवणरवणौ । विश्रवसः पुत्रो वैश्रवणः । रावणः । त्रिवेण्यास्त्रिवणश्च, त्रिवेणीसुतस्त्रैवणः ॥

## अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः (४. १. ११३)

वृद्धवर्जितेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । स्त्रीभ्यो ढकोऽपवादः । यामुनः । नार्मदः । शिक्षिताख्यायाः पुत्रः शैक्षितः । वृद्धेभ्यस्तु वासवदत्तेयः । अवृद्धाद् रौक्मिणेयरौहिणेयौ तु शुभ्रादित्वाड्ढकि ॥

## ऋष्यन्धकवृष्णिकुरुभ्यश्च (४. १. ११४)

ऋष्यादिभ्योऽतइञि प्राप्तेऽण् स्यात् । ऋषिभ्यः — वासिष्ठः । वैश्वामित्रः । स्फ्यकृतपुत्रः स्फैयकृतः । द्वारादित्वादैच् । ऋषिसमुदायत्वादृषित्वादण् न, मैत्रावरुणिः । अन्धकेभ्यः — श्वाफल्कः । वृष्णिभ्यः — वासुदेवः । आनिरुद्धः । कुरुभ्यः — नाकुलः । साहदेवः । गर्गादिद्युधिष्ठिरार्जुनरामसङ्कर्षणकृष्णगदप्रद्युम्नसाम्बसत्यकशूरेभ्यस्तु बाह्वादित्वादिञेव ॥

## मातुरुत् सङ्ख्यासम्भद्रपूर्वायाः (४. १. ११५)

सङ्ख्यादिपूर्वाया मातुरपत्येऽण् अन्त्यस्य रपर उकारश्च । गङ्गागौरीभ्यां पुत्रीकृतत्वाद् द्वयोर्मात्रोरपत्यं द्वैमातुरः । साम्मातुरः । भाद्रमातुरः ॥

## कन्यायाः कनीन च (४. १. ११६)

अण् । कानीनः कर्णः ॥

## विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु (४. १. ११७)

क्रमादण् । वत्सगोत्रश्चेद्वैकर्णः । भारद्वाजश्चेद् शौङ्गः, आत्रेयश्चेद् छागलः । स्वपुत्र[१] इञ् । वैकर्णिरित्यादि ॥

१. 'शेषु इञ्' ग. पाठः.

पीलाया वा (४. १. ११८)

पीलाख्यायाः स्त्रियां ढकि प्राप्ते अण् वा स्यात्। पैलः। पैलेयः। साल्वायाश्च वेष्यते। साल्वा क्षत्रियस्त्री। तत्पुत्रः साल्वः साल्वेयः॥

ढक् च मण्डूकात् (४. १. ११९)

अस्माड्ढक् अण् च वा स्यात्। माण्डूकेयः। माण्डूकः। वेत्यत इञि[1] माण्डूकिः। मण्डूकोऽत्र मुनिः भेकोऽपीति शङ्करः॥

स्त्रीभ्यो ढक् (४. १. १२०)

स्त्रीप्रत्ययान्तेभ्योऽपत्ये ढक् स्यात्। वैनतेयः। यौवतेयः॥

ढे लोपोऽकद्र्वाः (६. ४. १४७)

ढे परे भलोपः स्यात्। कद्र्वास्तु न। कमण्डलूसंज्ञायाः पुत्रः कामण्डलेयः। कद्र्वास्तु काद्रवेयः। 'वडवाकुञ्चाकोकिलाभ्योऽपत्येऽण् वाच्यः'। वडवासुतो वाडवः। कुञ्चः स्त्री कुञ्चा। क्रौञ्चः। कौकिलः। भूमीसपत्नीगोपिकागोपालिकादेस्तु शिवाद्यणेव॥

द्व्यचः (४. १. १२१)

द्व्यज्भ्यः स्त्रीशब्देभ्योऽपत्ये ढक् स्यात्। 'अवृद्धाभ्यः—' (४-१-११३) इत्यणोऽपवादः। दत्ताख्यायाः पुत्रो दात्तेयः। गौतेयः। ऐलः पार्थश्च शिवादिः। नदीभ्यस्तु 'द्व्यचो नद्याः' इति शिवादिपाठादणेव। नीलासुतो नैलः। तौङ्गः। भाद्रः॥

इतश्चानिञः (४. १. १२२)

अनिञन्ताद् द्व्यच इदन्तादस्त्रीलिङ्गादपि ढक्। आत्रेयः। वार्ष्णेयः। गाथेयः। गाथिरिदन्तोऽप्यस्तीति शङ्करः। भूमेः शिवादित्वात् भौमः। इञस्तु दाक्षेरपत्यं दाक्षायण इति फगेव। द्व्यच इत्युक्तेर्मारीच इत्यणेव। शा[illegible]नेयस्तु शुभ्रादिः॥

---

१. 'म', २. 'पाठाः' क पा०.

शुभ्रादिभ्यश्च (४. १. १२३)

एभ्योऽपत्ये ढक् । शुभ्रस्य शौभ्रेयः । श्वन् 'नस्तद्धित' (६-४-१४४) इति टिलोपः । द्वारादित्वादैच् शौवेयः । मृकण्डोः ढे लोपः । मार्कण्डेयः । अदन्तान्मृकण्डादण्यपि मार्कण्डोऽपीति न्यासः । शुक्रजीवयोः शौक्रेयः । जैवेयः । विभिन्नमातृजो वैमात्रेयः । द्वैमात्रेय इति वृत्तौ ।

शुभ्रादित्वेन गाङ्गेयो गाङ्गश्चापि शिवाद्यणि ।
गाङ्गायनिस्तिकादित्वादिति गङ्गा त्रिरूपिणी ॥
पाण्डोः शुभ्रशिवाद्युक्तेः पाण्डवेयश्च पाण्डवः ।
पाण्ड्वादीनां च ढे लोपो नेति वार्त्तिककीर्तितम् ॥

जिह्माशिनित्यस्य दाण्डिनायनेत्यादिना टिलोपाभावः । जैह्माशिनेयः ॥

प्रवाहणस्य ढे (७. ३. २८)

अस्य ढकि परे पूर्वपदस्य वा वृद्धिरुत्तरपदस्य नित्यं स्यात् । प्रावाहणेयः । प्रवाहणेयः ॥

तत्प्रत्ययस्य च (७. ३. २९)

ढप्रत्ययान्तस्यास्य वृद्धिनिमित्तप्रत्ययान्तरे परेऽपि पूर्वपदस्य वृद्धिर्वा स्यात् । प्रावाहणेयिः प्रवाहणेयिः । गोत्राद्यूनीत इञयम् ॥

विकर्णकुषीतकात् काश्यपे (४. १. १२४)

काश्यपे दत्तपुत्रे वैकर्णेयः । कौषीतकेयः । स्वपुत्रे वैकर्णिः । कौषीतकिः ॥

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (७. ३. १९)

एतदन्तेषु शब्देषु वृद्धिहेतुतद्धिते परे पूर्वोत्तरपदयोर्वृद्धिः स्यात् । सुभगापुंत्रः सौभागिनेयः । दौर्भागिनेयः । परस्त्रिया इनङि परस्त्रीन् एय् अनुशतिकादित्वादुभयपदवृद्धिः । पारस्त्रैणेयः । एवं बन्धकीजरतबिलीवर्दज्येष्ठाकनिष्ठामध्यमादेः ॥

कुलटाया वा (४. १. १२७)

अस्या अपत्ये ढकि इनङ् वा स्यात् । कौलटिनेयः । कौलटेयः । भिक्षार्थं कुलान्यटन्त्या एवम् । पुंश्चल्यर्थात्तु 'क्षुद्राभ्यो वा' (४. १. १३१) इति ढ्रकि कौलटेरोऽपि ॥

चटकाया ऐरक् (४. १. १२८)

'चटकाचेति वाच्यम्' चटकायाश्चटकस्य वा पुत्रश्चाटकैरः । 'स्त्र्यपत्येषु लुग् वाच्यः' द्वयोः पुत्री चटका ॥

गोधाया ढ्रक् (४. १. १२९)

ढमात्रस्य एय् । गोधा एय् र 'लोपो व्यो—(६. १. ६६) इति यलोपः । गोधा एर, वृद्धिः । यस्येति च । गौधेरः । शुभ्रादित्वाड्ढकि गौधेयोऽपि ॥

आरगुदीचाम् (४. १. १३०)

तन्मते गोधाया आरक् स्यात् । गौधारः । आरगन्येभ्योऽपीष्यते । पण्डः क्लीबः । तत्पुत्रः पाण्डारः । जडस्य जाडारः ॥

क्षुद्राभ्यो वा (४. १. १३१)

अङ्गहीना व्यभिचारिण्यश्च स्त्रियः क्षुद्राः । तद्वाचिभ्योऽपत्ये वा ढ्रक् । काणेरः । काणेयः । दासेरः । दासेयः । नट्याः नाटेरः । नाटेयः । आरगन्येभ्योऽपीति नाटारश्च ॥

पितृष्वसुश्छण् (४. १. १३२)

छस्य ईय् । पैतृष्वस्रीयः ॥

---

१. 'सुतः सौ', २. 'ख छ' क. ख. पाठः.

ढकि लोपः (४. १. १३३)

पितृष्वसुर्ढक् स्यात् । तस्मिन् परेऽन्त्यलोपश्च । पैतृष्वसेयः ॥

मातृष्वसुश्च (४. १. १३४)

पितृष्वसृवत् स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ॥

चतुष्पाद्भ्यो ढञ् (४. १. १३५)

चतुष्पाद्वाचिभ्योऽपत्ये ढञ् । सुरभिर्गौः । तदपत्यं सौरभेयः । जम्बुः शृगालः । जाम्बेयः ॥

गृष्ट्यादिभ्यश्च (४. १. १३६)

एभ्योऽचतुष्पाद्वचनेऽपि ढञ् । गार्ष्टेयः । सकृत्प्रसूता मानुषीह गृष्टिः । मित्रयोर्ढञि दाण्डिनाद्युक्त्या युलोपः । मैत्रेयः ॥

राजश्वशुराद्यत् (४. १. १३७)

श्वशुर्यः । राजन् य 'नस्तद्धिते' (६. ४. १४४) इति टिलोपे प्राप्ते ॥

ये चाभावकर्मणोः (६. ४. १६८)

भावकर्मार्थादन्यस्मिन् यादौ तद्धिते परे अन् प्रकृत्या स्यात् । राज्ञो यति जातिग्रहणं कार्यम् इति राजन्यः । क्षत्रियजातिः । अपत्यमात्रे त्वण् राजनः । अभावकर्मणोरित्युक्त्या राज्ञो भावः कर्म वा राज्यमिति टिलोपः ॥

क्षत्राद् घः (४. १. १३८)

घस्य इय् । क्षत्रियः । अयमपि जातावेव । क्षात्रिरन्यः ॥

कुलात् खः (४. १. १३९)

केवलात् कुलात् तदन्ताच्च खः स्यात् । कुलशब्देन सत्कुलवान् लक्ष्यते । तत्सुतः कुलीनः । द्विजकुलीनः ॥

अपूर्वपदादन्यतरस्यां यड्ढकञौ (४. १. १४०)

पूर्वपदरहितात् कुलादेतौ वा स्तः । कुल्यः । कौलेयकः । विकल्पात् कुलीनः ।

अत्रापूर्वपदत्वोक्तेस्तुल्यकुल्यो न सिध्यति ।
यद्वा तुल्यकुले साधुः साध्वर्थे यद्वदिष्यते ॥

महाकुलादञ्खञौ (४. १. १४१)

वाधिकारात् खश्च । माहाकुलः । माहाकुलीनः । महाकुलीनः ॥

दुष्कुलाड्ढक् (४. १. १४२)

वा स्यात् । दौष्कुलेयः । दुष्कुलीनः ॥

स्वसुश्छः (४. १. १४३)

स्वस्रीयः ॥

भ्रातुर्व्यच्च (४. १. १४४)

छश्च स्यात् । भ्रातुपुत्रो भ्रातृव्यः । भ्रात्रीयः ॥

व्यन् सपत्ने (४. १. १४५)

रूढ्या शत्रौ वाच्ये भ्रातुर्व्यन् स्यात् । भ्रातृव्यं हन्यात् । व्यव्यनोः स्वरे भेदः ॥

रेवत्यादिभ्यष्ठक् (४. १. १४६)

ठस्येकः (७. ३. ५०)

ठरूपस्य प्रत्ययस्य इकादेशः स्यात् । रेवतीपुत्रो रैवतिकः । दण्डग्राहस्य दाण्डग्राहिकः । 'अश्वमणिद्वारेभ्यः पाल्याः' । आश्वपालिकः । माणिपालिकः । ऐच्, दौवारपालिकः ॥

गोत्रस्त्रियाः कुत्सने ण च (४. १. १४७)

गोत्रप्रत्ययान्तस्त्रीशब्दात् कुत्सितेऽपत्ये वाच्ये णश्च ठक् च

१. 'कुलो रे' क. ख. पाठः.

स्यात् । गार्गीपुत्रो गार्गोऽयं जाल्मः । गार्गिको वा । अकुत्सने त्वीभ्यो ठक् गार्गेयः ॥

## वृद्धाट्ठक् सौवीरेषु बहुलम् (४. १. १४८)

वृद्धात् सौवीरगोत्रात् कुत्सितापत्ये बहुलं ठक् । भागवित्तिः तार्णबिन्दवः आकशापेय इति त्रिभ्य एव । भागवित्तिको जाल्मः । बहुलोक्तेर्'यञिञो—'रिति फगपि । भागवित्तायनः ॥

## फेश्छ च (४. १. १४९)

वृद्धात् फान्तात्सौवीरगोत्रात् कुत्सितापत्ये छ च ठक् च स्यात् । तिकादिफिञन्तेभ्यो .यामुन्दायनिसौयामायनिवार्ष्यायणिभ्य एव । यामुन्दायनीयो यामुन्दायनिको वा जाल्मः ॥

## फाण्टाहृतिमिमताभ्यां णफिञौ (४. १. १५०)

सौवीरगोत्रगाभ्यामाभ्याम् अपत्ये णफिञौ स्तः । क्रमोऽत्र न । फाण्टाहृतः । फाण्टाहृतायनिः । मैमतः । मैमतायनिः ॥

## कुर्वादिभ्यो ण्यः (४. १. १५१)

कौरव्यः । वावदूकपुत्रो वावदूक्यः । वैन्यः । मौर्यः । काव्यः शुक्रः । सौम्यो बुधः । हार्दिक्यः कृतवर्मा । सम्राजः क्षत्रिये । (ग०) सम्राट्पुत्रः क्षत्रियश्चेत् साम्राज्यः । साम्राजोऽन्यः । ब्राह्मणोऽयं कुरुः । क्षत्रियकुरोस्तु 'कुरुनादिभ्य' (४. १. १७२) इति तद्राजाख्यो ण्यो वक्ष्यते ॥

## सेनान्तलक्षणकारिभ्यश्च (४. १. १५२)

सेनान्तेभ्यो लक्षणशब्दात् कारिभ्यश्च अपत्ये ण्यः स्यात् । हरिषेणसुतो हारिषेण्यः । लाक्षण्यः । कारी शिल्पी । तान्तुवाय्यः । ताक्षण्यः । 'ये च'— (६. ४. १६८) इति प्रकृतिभावः । शिवाद्यणि ताक्ष्णोऽपि । 'प्रूर्व' —(६. ४. १३५) इत्यल्लोपः ॥

## उदीचामिञ् (४. १. १५३)

तन्मत उक्तेभ्यस्त्रिभ्य इञ् । हारिषेणिः । लाक्षणिः । तान्तु-वायिः ॥

तिकादिभ्यः फिञ् (४. १. १५४)

तिकपुत्रस्तैकायनिः। चान्द्रमसायनिः। कौरव्यात् क्षत्रियात्—कौरव्यायणिः ॥

कौसल्यकार्मार्याभ्यां च (४. १. १५५)

कोसलकर्मारयोरेतावादेशौ निपात्य ताभ्यां फिञ्विधिः । कोसलपुत्रः कौसल्यायनिः । कर्मारसुतः कार्मार्यायणिः ॥

उदीचां वृद्धादगोत्रात् (४. १. १५७)

अगोत्रवाचिनो वृद्धाच्छब्दात् फिञ् स्यादुदङ्मते ।
दैत्यद्विषायणिः कामायनिः कुलद्रुहायणिः ॥
भसंज्ञया पदत्वस्य बाधाज्ञश्वादि नो भवेत् ।
राजायनिस्तथा वाग्मायनिर्नान्ते टिलोपतः ॥
वाशिन्शब्दाद् दाण्डिनादेरलोपाद् वाशिनायनिः ।
प्राङ्मते तु यथाप्राप्तं वाग्मिदैत्यद्विषादयः ॥
गोत्रान्न फिञ् भाननस्य पुत्रो भानविरेव हि ।

त्यदादीनि च (१. १. ७४)

एतानि च वृद्धसंज्ञानि । तेन तत्पुत्रस्तादायनिः । अत्रापि प्राङ्मतेऽण् तादः । ऐदमः । 'वा नामधेयस्य वृद्धसंज्ञा वाच्या' (वा० १. १. ७३) नान्दायनिः कृष्णः । द्रौणायनिः । अवृद्धत्वे नान्दिः । द्रौणिः ॥

वाकिनादीनां कुक् च (४. १. १५८)

एषामुदङ्मते फिञ् कुगागमश्च । वाकिनस्य पुत्रो वाकिन-कायनिः । प्राङ्मते वाकिनिः । 'चर्मिवर्मिणोर्नलोपश्च' (ग० सू०) चार्मिकायणिः । वार्मिकायणिः ॥

पुत्रान्तादन्यतरस्याम् (४. १. १५९)

पुत्रान्तस्य शब्दस्य 'उदीचां वृद्धाद्—' (४. १. १५७) इति फिञि परे वा कुक् स्यात् । राजपुत्रस्य पुत्रो राजपुत्रकायणिः । राजपुत्रायणिः । अनुदङ्मते फिञभावाद् राजपुत्रिः ॥

प्राचामवृद्धात् फिन् बहुलम् (४. १. १६०)

ग्लुचुकायनिः । उदङ्मते ग्लौचुकिः । बहुलोक्तेः सर्वत्र न । दक्षाद् दाक्षिः ॥

मनोर्जातावञ्यतौ षुक् च (४. १. १६१)

अस्मादपत्ये जातौ वाच्यायामञ्यतौ स्तः, षुगागमश्च । मानुषः मनुष्यः । अपत्यमात्रे त्वणि मानवः । पौत्रादौ गर्गादित्वान्मानव्यः । जातौ तु मानवा इति सम्बन्धमात्रेऽण् ।

कुत्सितेऽञ्जेऽपि चापत्ये मनोरण् नस्य णस्तथा ।
कुत्सिते माणवो जाल्मस्तथाञ्जे माणवः शिशुः ॥

---

अथ तद्राजसंज्ञाः प्रत्ययाः ॥

जनपदशब्दात् क्षत्रियादञ् (४.१.१६८)

जनपदवाचकात् क्षत्रियनाम्नोऽपत्येऽञ् स्यात् । पञ्चाला इति जनपदो राजानश्चोच्यन्ते । तदपत्यं पाञ्चालः । वैदेहः । इक्ष्वाकुशब्दात् अञि ओर्गुणे प्राप्ते, दाण्डिनायनाद्युक्त्या टिलोपः । ऐक्ष्वाकः ॥ केकयशब्दादञि—

केकयमित्रयुप्रलयानां यादेरियः (७.३.२)

एषां वृद्धिहेतुतद्धिते परे यादेर्भागस्य इय् स्यात् । केक इय् आद्गुणः । आदिवृद्धिः । कैकेयः ॥

'क्षत्रियसमानशब्दात् जनपदात् तस्य राजेत्यर्थेऽपत्यवत् प्रत्ययो वाच्यः' । (वा० ४. १. १६६) पञ्चालानां राजा पाञ्चालः । मागधः ॥

## साल्वेयगान्धारिभ्यां च (४. १. १६९)

अञ् स्यात् । साल्वेयः । गान्धारः । अपत्यं च राजा चैवम् ॥

## द्व्यञ्मगधकलिङ्गसूरमसादण् (४. १. १७०)

द्व्यज्भ्यो मगधादिभ्यश्च जनपदतुल्यक्षत्रियनामभ्योऽण्[1] स्यात् आङ्गः । वाङ्गः । मागधः । कालिङ्गः । सौरमसः ॥

## वृद्धेत्कोसलाजादाञ्ञ्यङ् (४. १. १७१)

वृद्धेभ्य इदन्तात् कोसलाजादशब्दाभ्यां च ञ्यङ् स्यात् । वृद्धात्, सौवीरपुत्रः सौवीर्यः । इदन्तात्, चैद्यः । आवन्त्यः । कौन्त्यः । कौसल्यः । आजाद्यः । 'अप्रसिद्धात् पाण्डोः ड्यण् वाच्यः' । पाण्डूनां सुतस्तेषां राजा च पाण्ड्यः ॥

## कुरुनादिभ्यो ण्यः (४. १. १७२)

कुरोर्नकारादिभ्यश्च ण्यः स्यात् । कौरव्यः । नैषध्यः । कुरोः शिवादिविकादिपाठात् कौरवः । कौरवायणिरपि । नैषधस्तु निषधस्य राज्ञः सम्बन्धार्थेऽणि दाशरथवत् साध्यः ॥

## साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् (४. १. १७३)

साल्वजनपदस्यांशपालेभ्यः प्रत्यग्रथादिभ्यश्चेञ् स्यात् । जनपदशब्दादित्यणोऽपवादः । औदुम्बरादयः साल्वावयवाः । तदपत्यमौदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः ॥

## ते तद्राजाः (४. १. १७४)

एतेऽञादयस्तद्राजाख्याः । तेन 'तद्राजस्य बहुषु–' (२-४-६२) इत्यञादेर्लुक् । वैदेहः वैदेहौ विदेहाः । आङ्गः आङ्गौ अङ्गाः । एवं सौवीराः । अवन्तयः । कुन्तयः । कुरवः निषधाः । 'कौरव्याः पशव' इति वेणीसंहारोक्तिर्ब्राह्मणत्वारोपात् । तत्र ण्यस्यातद्राजत्वात् अस्त्रियामित्युक्तेः स्त्रीलिङ्गे बहुत्वेऽपि लुग् न । वैदेह्यः स्त्रियः । अपत्यार्थैरेव सह द्वन्द्वेन कृते बहुत्वेऽप्ययं लुक् स्यात् । यादवः कौरव्यो मागधश्च यदुकुरुमगधाः ॥

---

१. 'द्व्यज्भ्य' क. पाठः. २. 'यः । कुर' क. पाठः.

कम्बोजाल्लुक् (४. १. १७५)

अस्मादञो लुक् । कम्बोजपुत्रः कम्बोजः । एवं राजापि । 'कम्बोजादिभ्यो लुग्वाच्यश्चोलाद्यर्थम्' । चोलानां सुतश्चोलः । केरलः । मुरलः । शकः ॥

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च (४. १. १७६)

एभ्यस्तद्राजप्रत्ययस्य स्त्रीलिङ्गे लुक् स्यात् । अवन्तीनां पुत्री अवन्ती । कुन्ती । कुरूः ॥

इतो मनुष्यजातेरित्युदितो ङीपिहाद्ययोः ।
कुरोरूङुत इत्यूङ् स्यादपत्यत्वेन जातिता ॥

अतश्च (४. १. १७७)

स्त्रीलिङ्गेऽकाररूपस्य तद्राजप्रत्ययस्य लुक् स्यात् । शूरसेनी । अत्राणो लुक् । मद्री । अत्र ञ्यङ्त्वादण् । माद्री तु चिन्त्या ॥

न प्राच्यभर्गादियौधेयादिभ्यः (४. १. १७८)

शरावत्याः प्राच्यजनपदवाचिभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चात इत्युक्तो लुग् न स्यात् । प्राच्येभ्यः — पाञ्चाली । वैदेही । आङ्गी । वाङ्गी ।

नदी शरावती नाम निर्ऋतीशानदिग्वहा ।
तस्याः प्राग्दक्षिणाः प्राच्या उदीच्याः पश्चिमोत्तराः ॥

भर्गादेः — भार्गी । कैकेयीत्यादि । यौधेयादेस्तु पाश्चमिकतद्राजस्य लुङ् निषिध्यते । नत्वपत्यस्य ॥

अथ कौरव्यवासुदेववासिष्ठवैदतैकायनिप्रभृतिभ्यो युवविवक्षायां 'गोत्राद्यूनि—' (४-१-९४) इति प्रत्ययान्तरं प्राप्नोति । तैकायनेरण्, पूर्वेभ्योऽत इञ् । तत्रोच्यते —

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (२. ४. ५८)

ण्यान्तात् क्षत्रियगोत्रादप्यार्षगोत्राञ्ञिदन्ततः ।
परयोरणिञोर्लुक् स्याद् युवापत्ये विवक्षिते ॥

---

१. 'क् । श.' क. ख. पाठः.

कैरव्यः कुर्वादिभ्यो ण्यान्तः । तस्य युवा कौरव्य एव । इञो लुक् । वासुदेवो वृष्णित्वादणन्तः क्षत्रियगोत्रं, तत्रापि युवा वासुदेव एव । न तु वासुदेविः । वासिष्ठ इत्यृष्यण् । तत्रापि युवा वासिष्ठ एव । ञिदन्तात्तु वैदो विदाद्यञन्तः । तत्र युवा वैद एव । तिकादिभ्यः फिञा ञिदन्तस्तैकायनिः । तस्य यून्यणो लुक् । तेन तैकायनिरेव युवापि । एभ्योऽन्यत्र यूनीञादिः प्रागुक्तः । औपगविः । 'अब्राह्मण—गोत्रमात्राद् युवप्रत्ययमात्रस्य लुग्वाच्यः' । तेन क्षत्रियगोत्रादाणिञ्भ्यामन्यत्रापि युवप्रत्ययस्य लुक् स्यात् । वैश्यादिगोत्रादपि च स्यात् । 'द्व्यञ्मगध —' (४-१-१७०) इत्यणन्त आङ्गशब्दः क्षत्रियगोत्रः । ततो 'अणो द्व्यचः' (४-१-१५६)इति प्राप्तस्य फिञो लुक् । आङ्गो युवा । कुम्भको वैश्यः । चन्द्रगुप्तः शूद्रः । तयोरत इञन्तयोर्यूनि 'यञिञोः—' (४-१-१०१) इति फको लुक् । कौम्भकिश्चान्द्रगुप्तिश्च युवा ॥

एवञ्च वार्त्तिकोक्त्यात्र सूत्रे क्षत्रियगीर्वृथा ।
ण्यार्षपैलादिलुक् सर्वो ब्राह्मणेष्विति च स्थितम् ॥

## पैलादिभ्यश्च (२. ४. ५९)

एभ्यः परस्य युवप्रत्ययस्य लुक् 'पीलाया वा' (४-१-११८) इत्यणि पैलः । तस्माद् 'अणो द्व्यचः' (४-१-१५६) इति फिञो लुक् । तेन युवापि पैल एव । एवमौदमेघिः सात्यकिश्च युवा । अत्र-'यञिञोः—' (४-१-१०१) इति फको लुक् ॥

## इञः प्राचाम् (२. ४. ६०)

प्राग्देशगोत्रवाचिभ्य इञन्तेभ्योऽत्र यूनि लुक् ।
पान्नागारेर्युवापत्यं पान्नागारिः फकोऽत्र लुक् ॥
उदग्देशजे तु दाक्षेर्युवापत्यं दाक्षायण इति फगस्त्यैव ।

## न तौल्वलिभ्यः (२. ४. ६१)

तौल्वलिप्रभृतिभ्यस्तु प्राग्देशेऽपि न लुग्भवेत् ।
तौल्वलेर्हि युवापत्यं फकि स्यात् तौल्वलायनः ॥
अथ तद्राजेभ्योऽन्येषामपि केषांचित् बहुत्वे लुगुच्यते ।

## यस्कादिभ्यो गोत्रे (२. ४. ६३)

एभ्यः परस्य गोत्रप्रत्ययस्य तेनैव कृते बहुत्वे सति स्त्रीलिङ्गादन्यत्र लुक् स्यात् । अत्रानन्तरापत्यमपि गोत्रम् । यस्कापत्ये[1] शिवाद्यण् । यास्कः यास्कौ यस्काः ।

## यञञोश्च (२. ४. ६४)

गोत्रार्थयोः यञञोर्बहुत्वे लुक् । गर्गादिभ्यो यञ् । गार्ग्यः गार्ग्यौ गर्गाः । विदादिभ्योऽञ् । वैदः वैदौ विदाः ॥

षष्ठीतत्पुरुषे लुग्वा यञादेरबहुष्वपि ।
गार्ग्यस्य हि प्रिया गर्गप्रिया गार्ग्यप्रियापि वा ॥
एवं विदप्रिया वैदप्रियेत्याद्युत्तरेष्वपि ।
बहुत्वे तु लुगेव स्याद् गर्गाणां भूर्हि गर्गभूः ॥

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च (२. ४. ६५)

एभ्योऽपत्यप्रत्ययस्य बहुत्वे लुक् । अत्रेः 'इतश्चानिञः' (४-१-१२२) इति ढक् । आत्रेयः आत्रेयौ अत्रयः । भृग्वादेः ऋष्यणो लुक् । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ॥

## बह्वच इञः प्राच्यभरतेषु (२. ४. ६६)

प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्य बह्वचः शब्दात् परस्य इञो बहुत्वे लुक् स्यात् । प्राच्ये—पान्नागारिः पन्नागाराः । भरते—आर्जुनिः अर्जुनाः । भरतानां प्राच्यत्वेऽपि पृथगुक्तिः अन्यत्र प्राच्यग्रहे भरतानामग्रहार्था ॥

## न गोपवनादिभ्यः (२. ४. ६७)

विदादिगतेभ्यो गोपवनादिभ्योऽष्टभ्यः परस्य विदाद्यञो 'यञञोश्च(२-२-६४)' इति प्राप्तो लुङ्न स्यात् । गौपवनाः बैन्दवाः इत्यादि । पौनर्भवपारशवदौहित्रपौत्रनानान्द्राणां विदाद्यदन्तानामपि[2] बहुषु लुङ्नेति[3] भोजः ॥

---

1. 'स्कस्यापत्ये शि' ग. पाठः. 2. 'णामपि वि', 3. 'नो च' क. पाठः.

### तिककितवादिभ्यो द्वन्द्वे (२. ४. ६८)

तिकादेः कितवादेश्च परस्य गोत्रप्रत्ययस्य द्वन्द्वसमासे बहुत्वे लुक् स्यात् । तिकादित्वात् फिञि तैकायनयः कैतवायनयश्च । तेषां द्वन्द्वे तिककितवाः ॥

### उपकादिभ्योऽन्यतरस्यामद्वन्द्वे (२. ४. ६९)

उपकादिभ्यः परस्यापत्यप्रत्ययस्य द्वन्द्वे चाद्वन्द्वे च बहुत्वे वा लुक् स्यात् । उपकाः औपकायनाः, लमकाः लामकायनाः इत्यद्वन्द्वे । द्वन्द्वेऽपि उपकलमकाः औपकायनलामकायनाः । नडादिफगन्तावेतौ ॥

### आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् (२. ४. ७०)

अनयोर्बहुत्वेऽपत्यप्रत्ययस्य लुक् , क्रमादेतावादेशौ च स्तः । चः स्वरार्थः । आगस्त्यः आगस्त्यौ अगस्तयः । एवं कुण्डिनाः ॥

### अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे (४. १, ७८)

अणिञन्तानां गोत्रवाचिनामार्षगोत्रवर्जितानां गुरूपोत्तमानां शब्दानामणिञोः स्थाने स्त्रियां ष्यङादेशः स्यात् ॥

वृत्तवद् वर्णगणनात् त्रिप्रभृत्यक्षरान्विताः ।
शब्दा उपान्त्यगुरवः स्युर्गुरूपोत्तमा इह ॥

कुमुदगन्धेरपत्यमित्यणि कौमुदगन्धः । तत्र गोत्रादौ स्त्रियां वाच्यायामणः ष्यङ् । पङ्लोपः । 'यङश्चाप्' (४-१-७४) इति चाप् कौमुदगन्ध्या । एवं वराहादत इञ् । वाराहिः । ततो गोत्रे स्त्रियामिञः ष्यङ् । वाराह्या । हास्तिशीर्ष्या । आर्षगोत्रे ष्यङ् न । वासिष्ठी । अगुरूपोत्तमेऽपि न । औपगवी । द्वयोरणन्तत्वाद् ङीप् ॥

### गोत्रावयवात् (४. १. ७९)

स्वतो न गोत्रशब्दा ये कुलाख्या गोत्रवन्मताः ।
ते गोत्रावयवा नाम ये केचिन्मुखरादयः ॥

तेभ्योऽणिञोः स्त्रियां गोत्रे ष्यङादेशः स्यात् । मुखरस्य गोत्रस्त्री मौखर्या ॥

१, यौ' क ख. पाठः.

## क्रौड्यादिभ्यश्च (४. १. ८०)

क्रौडीप्रभृतिभ्यः स्त्रियां ष्यङ्प्रत्ययः स्यात् । पश्चम्युक्तेर्नोय-मादेशः । 'यस्येति च'(६-४-१४८)इतीलोपः, क्रौड्या । आपिशल्या । 'सूतायुवत्याम्' (ग-सू०) सूत्या यौवनवती ॥ 'भोजात् क्षत्रियगोत्रे' भोजगोत्रजा भोज्या ॥

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्य-तरस्याम् (४. १. ८१)

इञन्तेभ्य एभ्यः स्त्रियां ष्यङ्प्रत्ययो वा स्यात् । दैवयज्ञ्या दैवयज्ञीत्यादि । इञन्ताद्'इतो मनुष्यजातेः'(४-१-६५) इति ङीष् । इति ॥

अथ प्राग्दीव्यतीयसाधारणा उच्यन्ते —

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः (४. १. ८५)

दित्यादिभ्यः पत्युत्तरपदेभ्यश्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । दितेरपत्यं दैत्यः । ङीषन्तात् दितीशब्दात् स्त्रीभ्यो ढकि दैतेयः । ण्ये आदित्यः । ङीबन्ताड्ढकि आदितेयः । आदित्यस्य ण्ये यस्येति-लोपे च कृते पूर्वयकारस्य 'हलो यमां —' (८-४-६४)इति लोपः । आदित्यदेवत्यमादित्यं हविः । पत्युत्तरपदात् प्राजापत्योऽपत्यादिः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति सपत्नीशब्दादपि पत्युत्तरपदत्वात् ण्य इति सुब्धातुवृत्तौ । 'भस्याढे तद्धिते पुंवद्भावो वाच्यः' (वा० ६-३-३५) इति पुंवत्त्वम् । सपति य 'यस्येति—' (६-४-१४८) लोपः । वृद्धिः । सापत्यः । न्यास-मते तु सपत्न्याः पुंवत्त्वं नेति सापत्न्यः । शत्रुस्त्रीवाचकात्तु सपत्नी-शब्दादपत्ये शिवादीणि पुंवत्त्वस्यानिष्टत्वात् सापत्न एव ।

यस्मादपीष्यते याम्यष्टीकासर्वस्वंकृत् पुनः ।
सोमादप्यधुनैवाह सोम्यः सोमसुतो बुधः ॥
सौम्यः कुर्वादिरित्येके गर्गादियञितीतरे ।

१. 'तिः', २. 'तं', ३. 'बार्हस्पत्यो' क. पाठः.

प्राग्दीव्यतीयव्यापित्वाद् दित्यादिण्यस्तु शोभनः ॥
तथा हि सति सौम्याः स्युः सोमसम्बन्धिनोऽखिलाः ।
तेषां च कोमलत्वात् स्यात् सौम्योऽन्योऽप्युपचारतः ॥
देवतार्थेऽस्ति सोमाट्ट्यण् तेन सौम्य इतीतरे ।
तद्देवतात्वोपचारात् स्याद्धि सम्बन्धिनामपि ॥
स्त्रियां तु तत्र सौमी स्यादिह सौम्येति भिद्यते ।
स्वाम्याह सोम्य इत्येव शाखादेर्य इवार्थकः ॥

## अश्वपत्यादिभ्यश्च (४. १. ८४)

एभ्यः पत्युत्तरपदत्वेऽप्यणेव । अश्वशतधनगणराष्ट्रमूलकुलगृहपशुधान्यधर्मधन्वन्सभाप्राणसेनाक्षेत्राधिपूर्वादण् । आश्वपतः । शातपतः। धानपत इत्यादि। 'पृथिव्या जाञौ वाच्यौ' (वा० ४-१-८५) अञि ङीबिति भेदः । पार्थिवा पार्थिवी । 'देवस्य यञञौ' (वा० ४-१-८५) देवस्यापत्यादिर्दैव्यः, दैव इत्यादि। 'बहिषो यञ् टिलोपश्च'। (वा० ४-१-८५) बहिर्भवादि बाह्यम्। 'ईकक् च'। (वा० ४-१-८५) टिलोपश्च स्यात्। बाहीको म्लेच्छः। 'स्थामान्तादप्रत्ययो वाच्यः'। (वा० ४-१-८५) नस्तद्धिते। अश्वत्थाम्नः पुत्रादिः अश्वत्थामः। प्राग्दीव्यतीयेऽन्यत्राप्यजादिप्रत्ययप्राप्तौ, 'गोर्यद्वाच्यः' (वा० ४-१-८५) गोरपत्यादावणप्राप्तौ गव्यः। तथा दीव्यत्यर्थे इकप्राप्तौ गव्यः ॥

## उत्सादिभ्योऽञ् (४. १. ८६)

एभ्यः प्राग्दीव्यतीयेष्वञ् स्यात्। अणञोः स्वरे भेदः। उत्सो निर्झरः तत्र भवादिरौत्सः। औदपानः। सौवर्णः। माहानसः। माध्यन्दिनः। एवं भरतकुरुसत्वज्जनपदपञ्चालोशीनरककुब्णिगादेः॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (४. १. ८७)

धान्यानां भवन इत्यतः प्राग्येष्वर्थेषु स्त्रीपुंसशब्दाभ्यां क्रमादेतौ स्तः, स्त्री नञ् वृद्धिणत्वे। स्त्रियोऽपत्यादिः स्त्रैणः॥

तस्येदमर्थतोऽन्यत्र ण्यादयः सर्वबाधकाः।
इत्येवं भाष्यवाग्युक्तेः स्त्रीभ्यो ढग् बाध्यते तथा ॥

पुंस् स्नञ् —

स्वादिष्वसर्वनामस्थाने (१. ४. १७)

सर्वनामस्थानवर्जितेषु स्वादिषु परेषु भसंज्ञातोऽन्यत्र पूर्वं पदसंज्ञा। इति पदत्वे संयोगान्तलोपः। पौंस्नः। वतिप्रत्ययात् पूर्वं सर्वत्राग्निकलिभ्यां ढग् वाच्यः' (वा० ४-२-८) अग्निकल्योरपत्यादिः आग्नेयः। कालेयः॥

॥ इत्यपत्यभागः ॥

---

॥ अथापत्यगणाः ॥

उत्सोदपानविकारविनदतरुणतलुनधेनुपीलु(कुल)सुवर्णेभ्यः ॥

औत्सः। औदपानः। वैकारः। वैनदः। तारुणः। तालुनः धैनवः। पैलुकुलः। सौवर्णः ॥

भरतकुरुसत्व*दिन्द्रावसानजनपदपञ्चालोशीनरेभ्यः।

भारतः। कौरवः। सात्वतः। ऐन्द्रावसानः। जानपदः। पाञ्चालः। औशीनरः ॥

ककुबुष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीभ्यः ॥

काकुभः। औष्णिहः। आनुष्टुभः। बार्हतः। पाङ्क्तः। त्रैष्टुभः। जागतः ॥

बृहन्महद्रथन्तरमध्यन्दिनमल्लकीय+महानादमहानसमहाप्राणेभ्यः ॥

बार्हतः। माहतः। राथन्तरः। माध्यन्दिनः। माल्लकीयः। माहानादः। माहानसः। माहाप्राणः ॥

---

* 'विकर', + 'महानद' इति काशिकादिषु पाठः

वष्कयादसमासे ॥

वष्कयो वत्सः वाष्कयः । समासे, सुवष्कयपुत्रः सौवष्कयिः ॥

पृषदोंऽशे ॥

पृषद्, बिन्दुः तत्सम्बन्ध्यंशः पार्षतः ।

'उदस्थाना(मीद्) देशे' । औदस्थानो नाम देशः ।

ग्रीष्मादच्छन्दसि ॥

ग्रीष्मदैवत्यं ग्रैष्मम् । छन्दसि वाच्ये त्वणेव । ग्रैष्मी त्रिष्टुप् ॥

बाहूपबाहूपबिन्दुअजधेनुचटकुशिवाकुभ्यो गोत्रादिभ्यः ॥

गोत्रादिपुरुषेभ्य एभ्योऽपत्यमात्रे इञ् । बाहविः । औपबाहविः । उपचाकु इति वृत्त्यादिपाठे औपचाकविः । औपबिन्दविः । आजधेनविः । चाटकविः । शैवाकविः । गोत्रादिभ्य इत्युक्तेर्गोत्रादिपुरुषत्वेन प्रसिद्धानाम् । अन्यनामत्वे न । बाहुः कश्चित्, तत्पुत्रो बाहवः ॥ एतदूर्ध्वगणेष्वपि योज्यम् ॥

वृकलाकृकलाचूडाबलाकाजङ्घाच्छगलाभगलालहकाध्रुवकाध्रुवकामूषिकासुमित्रादुर्मित्रादिभ्यः ॥

वार्कलिः । कार्कलिः । चौडिः । बालाकिः । जाङ्घिः । छागलिः भागलिः । लाहकिः । ध्रौवाकिः । ध्रौवकिः । मौषिकिः । सौमित्रिः । दौर्मित्रिः ॥

युधिष्ठिरार्जुनरामसङ्कर्षणकृष्णगदप्रद्युम्नसाम्बसत्यकशूरासुराजीगर्तेभ्यः ॥

यौधिष्ठिरिः । आर्जुनिः । रामिः । साङ्कर्षणिः । कार्ष्णिः । गादिः । प्राद्युम्निः । साम्बिः । सात्यकिः । शौरिः । आसुरिः । आजीगर्तिः ॥

सुधावत्पुष्करसदनुहरदनडुत्पञ्चसप्ताष्टक्षेमवृद्धिमाषशराविश्रृङ्खलातोदिखरनादिभ्यः ॥

सुधा विद्यतेऽस्येति सुधावान् । तस्यापत्यं सौधावतिः । पौष्करसादिः । आनुहारतिः । अनुशतिकादी । आनडुहिः । पाङ्चिः । सातिः । आष्टिः । क्षैमवृद्धिः । माषिः । शारविः । *शार्ङ्गलिः । तौदिः । स्वारनादिः ॥

प्राकारनगराभ्यां मर्दिनः ॥

प्राकारमर्दिः नागरमर्दिः ॥

इन्द्राग्निदेवेभ्यः शर्मणः ॥

ऐन्द्रशर्मिः । आग्निशर्मिः । दैवशर्मिः ॥

उदञ्चः संज्ञायाम् ॥

संज्ञात्वादञ्चतेः क्विनि नलोपाभावः । औदञ्चिः । असंज्ञायां तु, उदीचोऽपत्यमौदीचः ।

उदङ्काच्च ॥

औदङ्किः ॥

कुसुभ्यां नाम्नः ॥

कौनामिः । सौनामिः ॥

शिरोलोमभ्याम् ॥

एतदन्ताभ्यामिञ् । हास्तिशीर्षिः । औडुलोमिः ।

सम्भूयोम्भोमितौजश्शलङ्कूनां लोपश्च ॥

एषामन्त्यलोप इञ्च । साम्भूयिः । आम्भिः । आमितौजिः । शालङ्किः । भूयसोऽपि केचित् । भौयिः । एष्वदन्तानां ऋष्यायणबाधायोक्तिः । आकृतिगणोऽयमिति वृत्तौ ॥

कुञ्जब्रध्नशङ्खभस्मगणलोमशठशाकशुण्डाशुभस्कन्दस्तम्भविपाड्भ्यः ॥

कौञ्जायन्यः । ब्राध्नायन्यः । शाङ्खायन्यः । भास्मायन्यः । गाणायन्यः । लौमायन्यः । शाठायन्यः । शाकायन्यः । शौण्डायन्यः । शौभायन्यः । स्कान्दायन्यः । स्ताम्भायन्यः । वैपाशायन्यः ॥

* 'शृङ्गलातोदिन्' इत्येकं पदं काशिकादिषु ।

नडञ्चरबकमुञ्जेतिकेतिशोपकलमकसप्तलवाजप्यतिकाग्निशर्मभ्यः ॥

नाडायनः । चारायणः । बाकायनः । मौञ्जायनः । ऐतिकायनः । ऐतिशायनः । औपकायनः । लामकायनः । साप्तलायनः । वाजप्यायनः । तैकायनः । आग्निशर्मायणः ॥

वृषगणप्राणनराायकदासकमित्रपिङ्गरपिङ्गलकिङ्करकिङ्कलकातरकातलेभ्यः ॥

वार्ष(ग)णायनः । प्राणायनः । नारायणः । सायकायनः । दासकायनः । मैत्रायणः । पैङ्गरायणः । पैङ्गलायनः । कैङ्करायणः । कैङ्कलायनः । कातरायणः । कातलायनः ॥

द्वीपाजकाश्यकाश्यपकाव्यामुष्यामित्रचित्रलिगुकुमार लोहदुर्गेभ्यः ॥

द्वैपायनः । आजायनः । काश्यायनः । काश्यपायनः । काव्यायनः । आमुष्यायणः । आमित्रायणः । चैत्रायणः । लैगवायनः । कौमारायणः । लौहायनः । दौर्गायणः ॥

स्तम्बाग्रशिंशपातृणशकटसुमतमिमतार्चजनन्धरयुगन्धरहंसकपञ्चालेभ्यः ॥

स्ताम्बायनः । आग्रायणः । शैंशपायनः । तार्णायनः । शाकटायनः । सौमतायनः । मैमतायनः । आर्चायणः । जानन्धरायणः । यौगन्धरायणः । हांसकायनः । पाञ्चालायनः ॥

दण्डिन्हस्तिन्चर्मसिन्सुकृत्यस्थिरकब्राह्मणाश्वलचटकबदराध्वरखरपकामुकेभ्यः ॥

दाण्डिनायनः । हास्तिनायनः । चामसायनः । सौकृत्यायनः । स्थैरकायणः । ब्राह्मणायनः । आश्वलायनः । चाटकायनः । बादरायणः । आध्वरायणः । खारपायणः । कामुकायनः ।

ब्रह्मदत्तोदुम्बरशणशोणाश्वबालिशदण्डवेभ्यश्च ॥

ब्राह्मदत्तायनः । औदुम्बरायणः । शाणायनः । शौणायनः । आश्वायणः । बालिशायनः । दाण्डवायनः ॥

कृष्णरणाभ्यां ब्राह्मणवासिष्ठयोः ॥

ब्राह्मणश्चेत् कार्ष्णायनः । वासिष्ठश्चेद् राणायनः ॥

शलङ्कुक्रोष्टुवोर्लोपश्च ॥

शालङ्कायनः । क्रौष्टायनः ॥

अग्निशर्मणो वृषगणे ॥

वृषगणगोत्र(ण? ज)श्चेद् आग्निशर्मायणः । नो चेत् बाह्वादित्वा-दाग्निश(र्मि? र्मिः) ।

दक्षो नडादिरित्येके गोत्रारोपोऽप्यनन्तरे ।
तेन दाक्षायणी गौरी गोत्रत्वाज्जातिङीषयम् ॥

इति ॥

बिदोर्वकश्यपकुशिकभरद्वाजोपमन्युकिलातविदर्भ-विश्वानरर्ष्टिषेणेभ्यः ॥

एभ्यो गोत्रेऽञ् । बैदः । और्वः । काश्यपः । कौशिकः । भार-द्वाजः । औपमन्यवः । कैलातः । वैदर्भः । वैश्वानरः । आर्ष्टिषेणः ॥

ऋतभागहर्यश्वप्रियकापस्तम्बकूचवारशरद्वच्छुन-केभ्यः ॥

आर्तभागः । हार्यश्वः । प्रैयकः । अपस्तम्बस्य—आपस्तम्बः । कौचवारः । शारद्वतः । शौ(न)कः ॥

गोपवनशिग्रुबिन्दुभाजनाश्वावतानश्यामाकशम्बक-श्यावर्णेभ्यः ॥

गौपवनः । शैग्रवः । बैन्दवः । भाजनः । आश्वावतानः । श्यामाकः । शाम्बकः । श्यावर्णः ॥

हरितकिन्दासबह्यस्काकेल्रूषबध्योगविष्णुवृद्धप्रतिबोधरथीतररथन्तरगविष्ठिरगविष्ठिलनिषादशबरमठरसूदाकुपृदाकुम्यश्च ॥

हारितः । कैन्दासः । बाह्यस्कः । आर्कलूषः । बाध्यौगः । अनुशतिकादिः । वैष्णुवृद्धः । प्रातिबोधः । राथीतरः । राथन्तरः । गाविष्ठिरः । गाविष्ठिलः । नैषादः । शाबरः । माठरः । सार्दाकवः । पार्दाकवः इति ॥

गर्गवत्साजव्याघ्रपात्सङ्कुलसंकृतिप्राचीनयोगपुलस्तिरेभशटशङ्खाग्निवेशेभ्यो यञ् ॥

एभ्यो गोत्रे यञ् । गार्ग्यः । वात्स्यः । आज्यः । वैयाघ्रपद्यः । अत्र 'पादः पदि' ति पादन्तस्य भस्य पद्भावः । साङ्कृत्यः । आसङ्कृत्यः । प्राचीनयोग्यः । पौलस्त्यः । रैभ्यः। शाट्यः । शाङ्ख्यः । आग्निवेश्यः ॥

धूमावटचमसनमसधनञ्जयतृक्षविश्वावसुजरमाणकुरुकतानडुद्भ्यः ॥

धौम्यः । आवट्यः । चामस्यः । नामस्यः । धानञ्जय्यः । तार्क्ष्यः । वैश्वावसव्यः । जारमाण्यः । कौरुकत्यः । आनडुह्यः ॥

लोहितसंशितबभ्रुवल्गुमण्डुमङ्क्षुशङ्कुलिङ्गुजिगीषुगुहलुमन्तुतन्तुभ्यः ॥

लौहित्यः । सांशित्यः । बाभ्रव्यः । वाल्गव्यः । माण्डव्यः । माङ्क्षव्यः । शाङ्कव्यः । लैङ्गव्यः । जैगीषव्यः । गौहलव्यः । मान्तव्यः । तान्तव्यः ॥

मनुमनायीसूनुसुवकर्पकक्षतरुक्षतलुक्षतण्डवतण्डकविकतेभ्यः ॥

मानव्यः । मानाय्यः । सौनव्यः । सौव्यः । कार्पक्यः । आर्क्ष्यः । तारुक्ष्यः । तालक्ष्यः । ताण्ड्यः । वातण्ड्यः । काव्यः । कात्यः ॥

शकलकण्वगोकक्षागस्त्यकुण्डिनीयज्ञवल्कवृणवल्का-मयजातविरोहितवृषगणरहूगणशाण्डिलमुद्गलेभ्यः ॥

शाकल्यः । काण्व्यः । गौकक्ष्यः । यस्येति लोपे हलो यमामिति यलोपः । आगस्त्यः । कौण्डिन्यः । याज्ञवल्क्यः । वार्ण्यः । वाल्क्यः । आमयजात्यः । वैरोहित्यः । वार्षगण्यः । राहूगण्यः । शाण्डिल्यः । मौद्गल्यः ॥

मुसलोलूकजतुकर्णमन्त्रिकाश्मरथशर्कराक्षपूतिमाष-स्थूराङ्करतपिङ्गलकृष्णगोवन्देभ्यः ॥

मौसल्यः । औलूक्यः । जातुकर्ण्यः । मान्त्रिक्यः । आश्मरथ्यः । शार्कराक्ष्यः । पौतिमाष्यः । स्थौर्यः । आङ्करत्यः । पैङ्गल्यः । कार्ष्ण्यः । गौवन्द्यः ॥

भिषक्तितिक्षभडितभण्डितचिकितेन्द्रहूदेवहूपिप्पलवे-कल्ब्रृहदग्निजमदग्निपराशरेभ्यः ॥

भैषज्यः । तैतिक्ष्यः । भाडित्यः । भाण्डित्यः । चैकित्यः । ऐन्द्रहव्यः । दैवहव्यः । पै(प्प)लव्यः । वैकलव्यः । बार्हदग्न्यः । (जामदग्न्यः) । पाराशर्यः ॥

दल्भकुटलकुटीगुचणकचुलुकोञ्चकर्कटालापिन्-सवर्णसुवर्णसुलाभिविदभृदादिभ्यः ॥

दाल्भ्यः । कौटल्यः । कौटीगव्यः । चाणक्यः । चौलुक्यः । औञ्च्यः । कार्कट्यः । 'नस्तद्धिते' आलाप्यः । सावर्ण्यः । (सौवर्ण्यः ।) सौला(दि?)भ्यः । वैदभृत्यः ॥

वाजादसमासे ॥

वाज्यः । समासे तु सौवाजिः । गर्गाद्युक्तानामेवार्थनियमो मधुबभ्र्वोरित्यादिनोक्त इति ॥

अश्वादसशंखकुटपुटरोहिणखर्जूरपिञ्जूरभडिलभ-ण्डिलभडितभण्डितेभ्यः फञ् ॥

एभ्यो गोत्रे फञ् । आश्वायनः । आश्मायनः । शाङ्खायनः । कौटायनः पौटायनः । रौहिणायनः । खार्जूरायणः । पैञ्जूरायणः । भाडिलायनः । भाण्डिलायनः । भाडितायनः । भाण्डितायनः ॥

प्रहृतरोमोदक्षान्तकुलकालकाशगोलाङ्ववार्कस्वनध्वनपादचक्रेभ्यः ॥

प्राहृतायनः । रौमोदायनः । क्षान्तायनः । कौलायनः । कालायनः । काशायनः । गौलाङ्वायनः । आर्कायणः । सौवनायनः । शोभनमनितीति पचाद्यजिल्वैजृष्टेरूहितं (?) ध्वानायनः । (पदादौ ?) पादायनः । चाक्रायणः ॥

ग्रीवाश्रविष्ठापवित्रापविन्दागोमिन्वाग्मिन्श्यामन्धूमधूम्रवस्तविश्वानरविदेभ्यः ॥

ग्रैवायणः । श्राविष्ठायनः । पावित्रायणः । पाविन्दायनः । गौमायनः । वाग्मायनः । श्यामायनः । धौमायनः । धौम्रायणः । वास्तायनः । वैश्वानरायणः । वैदायनः ॥

जडखडार्हग्रीष्मवीक्षविशम्पविशालगिरिचपलनमदासकानड्वाहेभ्यः ॥

जाडायनः । खाडायनः । आर्हायणः । ग्रैष्मायणः । वैक्षायणः । वैशम्पायनः । वैशालायनः । गैरायणः । चापलायनः । नामदासकायनः । आनडुह्यायनः ॥

धन्यधर्म्यार्जुनपैल्योत्सातवकितवशिवशूद्रकखदिरसुमंनोदुर्मनोभ्यः ॥

धान्यायनः । धार्म्यायणः । आर्जुनायनः । पैल्यायनः । औत्सातवायनः । कैतवायनः । शैवायनः । शौद्रकायणः । खादिरायणः । सौमंनसायनः । दौर्मनसायनः ॥

जातात्पुंसि ॥

जातायनः । स्त्रियान्तु ढक्, जातेयः ॥

शकभरद्वाजाभ्यामात्रेये ॥

आत्रेयश्चेच्छाकायनः । भारद्वाजायनः । (कैतवायनः शैवायनः शौद्रकायणः खादिरायणः सौमनसायनः दौर्मनसायनः ?) अन्यत्र शाकिः । भारद्वाजः विदाद्यञि ॥

आत्रेयाद्भारद्वाजे ॥

भारद्वाजश्चेदात्रेयायणः । अन्यत्रात्रेयः । इञो 'ण्यक्षत्रिये'ति लुक् । पैल्यानडुह्यात्रेयाणां गोत्रत्वाद्यून्येव फञ् । इति ।

शिवप्रोष्ठप्रोष्ठिकचण्डजम्भकुठारानभिम्लानककुत्थोरलविरलपिष्टसुपिष्टेभ्योऽण् ॥

एभ्योऽपत्यमात्रेऽण्, अदन्तानां इञ्बाधकः । शैवः । प्रौष्ठः । प्रौष्ठिकः । चाण्डः । जाम्भः । कौठारः । आनभिम्लानः । काकुत्थः । औरलः । वैरलः । पैष्टः । सौपिष्टः ॥

पिटकपिटाकतृक्षाकवर्तनाक्षविरूपाक्षखड्डूरकरेखलेखसुखलेखनखञ्जन(खञ्ज)रसञ्जीरमञ्जीरकेभ्यः ॥

पैटकः । पैटाकः । तार्क्षाकः । वार्तनाक्षः । वैरूपाक्षः । खाड्डूरकः । रैखः । लैखः । सौखः । लैखनः । खाञ्जनः । खाञ्जरः माञ्जीरः । माञ्जीरकः ॥

वर्णकर्णकोहलकहोलककुम्भोर्णनाभनभागहेहयककुत्स्थवृष्णिकक्षीरह्रदजलह्रदेभ्यः ॥

वार्णः । कार्णः । कौहलः । काहोलकः । काकुम्भः । और्णनाभः । नाभागः । हैहयः । काकुत्स्थः । वार्ष्णिकः । क्षैरह्रदः । जालह्रदः ॥

यस्कलह्यद्रुह्यायःस्थूणतृणकर्णभलन्दनकुरुपाण्डुवतण्डर्षिपेणतृणतक्षभ्यः ॥

यास्कः । लाह्यः । द्रौह्यः । आयःस्थूणः । तार्णकर्णः । भालन्दनः । कौरवः । पाण्डवः । कुरोर्ण्ये पाण्डोड्यण्आदिढकि च प्राप्त उक्तिः । वातण्डः । आर्ष्टिषेणः । तार्णः । ताक्षणः । अस्य कारिभ्य उक्तो ण्यश्रेष्टः । ताक्षण्यः ॥

गोपिकागोपालिकाकपिलिकाजटिलिकाबधिरिका-लोहितिकार्यश्वेतोत्क्षपापृथिकापृथेलासपत्नीभ्यः ॥

एभ्यः स्त्रीभ्यो ढक्प्राप्तिः । गौपिकः । गौपालिकः । कापिलिकः । जाटिलिकः । बाधिरिकः । लौहितिकः । आर्यश्वेतः । औत्क्षपः । पार्थिकः । पार्थः । ऐलः । सापत्नः ॥

भूमिभूरिमुनिसन्धिजरत्कारूनकारूहरितपादकपिञ्जलकुण्डोपरथब्रह्मगुप्तखर्जूरकर्णमयूरकर्णेभ्यः ॥

भौमः । भौरः । मौनः । सान्धः । 'इतश्च'ति ढक्प्राप्तिः । जरत्कारूनकारूभ्यामूङन्ताभ्यां स्त्रीभ्यो ढक्प्राप्तिः । जारत्कारवः । नाकारवः । हारितपादः । कापिञ्जलः । कौण्डोपरथः । ब्राह्मगुप्तः । खार्जूरकर्णः । मायूरकर्णः ॥

द्व्यचो नद्याः ॥

नैलः ॥

विपाड्गङ्गाभ्याम् ॥

वैपाशः । गाङ्गः । अनयोर्द्व्यच्त्वेऽपि शुभ्रादिशुआदिकार्येण बाधे प्राप्त उक्तिः । वैपाशायन्यः । गाङ्गेयः ॥

त्रिवेण्यास्त्रिवणश्च ॥

त्रिवेणीपुत्रस्त्रैवण इति ॥

शुभ्रविष्टपुरब्रह्मकृतशतद्वारशलाथलाणविप्रवाहण-भरतभरमकर्पूरेतराजिराश्वतुदगोदन्तेभ्यः ॥

एभ्योऽपत्ये ढक् । शौभ्रेयः । वैष्टपुरेयः ब्राह्मकृतेयः । शातद्वारेयः । शालाथलेयः । आणीवेयः । प्रावाहणेयः । प्रवाहणेय इति च द्वैधोक्तम् । भारतेयः । भारमेयः । कार्पूरेयः । वैतरेयः । आजिरेयः । बाम्बेयः । तौदेयः । कौदन्तेयः ॥

कुशाम्बविश्रविशशालूकदेवतरालीढसुदत्तसुदक्षवायुदत्ताकशापशाकलखदूरकशुक्रशुक्रोभ्रजीविभ्यः ॥

कौशाम्बेयः वैश्रेयः वैशेयः । शालूकेयः । दैवतरेयः । आलीढेयः । सौदत्तेयः । सौदक्षेयः । वायुदत्तेयः । आकशापेयः । शाकलेयः । खादू(रि?रके)यः । (शौकेयः ।) शौक्रेयः । औभ्रेयः । जैवेयः ॥

कद्रुपाण्डुमृकण्डुयमष्ठमकष्ठकर्वूलेखाभ्रशलाकाभ्रूशकुनिशकन्ध्यनिधिपरिधिविश्रयतिथ्यनुदृष्टयजबस्तिभ्यः ॥

काद्रवेयः । पाण्डवेयः । मार्कण्डेयः । यामष्ठेयः । माकष्ठेयः । कार्वेयः । लैखाभ्रेयः । शालाकाभ्रेयः । शाकुनेयः । शाकन्धेयः । आनिधेयः । पारिधेयः । वैश्रेयः, आतिथेयः । आनुदृष्टेयः । आजबस्तेयः ॥

गङ्गागोधाविधवाशलाकाकुमारिकाकिशोरिकाकुबेरिकाम्बिकाशोकाकर्कलाकर्कलासाखडोन्मत्तागन्धपिङ्गलाधर्मिणीरुक्मिणीरोहिणीभ्यः ॥

गाङ्गेयः । गौधेयः । वैधवेयः । शालाकेयः । कौमारिकेयः । कैशोरिकेयः । कौबेरिकेयः । आम्बिकेयः । आशोकेयः । कार्कलेयः । कार्कलासेयः । खाडोन्मत्तेयः । गान्धपिङ्गलेयः । धार्मिणेयः । रौक्मिणेयः । रौहिणेयः । एषां मानुषीनामत्वादवृद्धाभ्य इत्यणप्राप्तिः । विधवायास्तु क्षुद्राभ्य इत्यणप्राप्तिः ॥

श्वन्नदमन्सुनामन्सुदामन्जरतिन्बलीवर्दिन्राजिष्ठाशिन्दिक्सुवक्षोविमातृमुन्मुद्धादिभ्यः ॥

नस्तद्धित इति टिलोपः। द्वारादित्वादैच् शौवेयः। आश्मेयः। सौनामेयः। सौदामेयः। जारतेयः। वालीवर्देयः। जैह्माशिनेयः। दैशेयः। सौवक्षसेयः। विभिन्नमातृजो वैमात्रेयः। मृदो, मार्देयः। मृदोरपि, मार्देयः॥

लक्षणश्यामयोर्वासिष्ठे॥

वासिष्ठश्चेत् लाक्षणेयः। श्यामेयः। अन्यत्र लाक्षणिः, अश्वादित्वाच्छ्यामायनः॥

कल्याणीसुभगादुर्भगाबन्धकीजरतीवलीवर्दीज्येष्ठाकनिष्ठामध्यमापरस्त्र्यनुसृष्टयनुदृष्टीनामिनङ् च॥

एभ्योऽपत्ये ढक्, इनङ् च। काल्याणिनेयः। सौभागिनेयः। दौर्भागिनेयः। बान्धकिनेयः। जारतिनेयः। वालीवर्दिनेयः। ज्यैष्ठिनेयः। कानिष्ठिनेयः। माध्यमिनेयः। पारस्त्रैणेयः। आनुसृष्टिनेयः। आनुदृष्टिनेयः॥

गृष्टिहृष्टिहलिवलिविश्रिकुद्रथजबस्तिमित्रयुभ्यः॥

एभ्योऽपत्ये ढक्। गार्ष्टेयः। हार्ष्टेयः। हालेयः। (वालेयः।) वश्रेयः। कौद्रेयः। आजवस्तेयः। मैत्रेयः॥

रेवतीकुक्कुटाक्षवृकबन्धिभ्यष्ठक्।

एभ्योऽपत्ये ठक्। रैवतिकः। कौक्कुटाक्षिकः। वार्कबन्धिकः॥

अश्वमणिद्वारेभ्यः पाल्याः॥

आश्वपालिकः। माणिपालिकः। दौवारपालिकः॥

वृककर्णदण्डेभ्यो ग्राहात्॥

वार्कग्राहिकः। कार्णग्राहिकः। दाण्डग्राहिकः। 'वृद्धात् ठक् सौवीरेषु बहुलम्' इत्येतद् भागवित्तिस्तार्णबिन्दव आ(क)शापेय इति त्रिभ्य एवेष्यते। 'फेश्छ च' इत्येतदपि यामुन्दायनितांयामायनिषाण्डायनिभ्य एवेष्यते॥

कुरुशकन्धुशङ्कुकर्तृभर्तृपितृमद्राक्षन्कापिञ्जला-
विघातकीन्द्रजालिदामोष्णीषिभ्योऽपत्ये ण्यः ॥

एभ्योऽपत्ये ण्यः । कौरव्यः । शाकन्धव्यः । शाङ्कव्यः । 'रीङृत' इति रीङि, 'यस्ये'ति लोपे, कार्त्र्यः । भार्त्र्यः । पैतृमत्यः । वाच्यः । 'ये चे'ति प्रकृतिभावः । ताक्षण्यः । क्वचित् 'सेनान्ते'ति ण्यस्य सिद्धेरकारोरिदमुक्तम् । कापिञ्जलाद्यः । गोत्रस्य प्रकृतित्वात् यूनि प्रत्ययः । घातक्यः ऐन्द्रजाल्यः दामोष्णीष्यः ॥

कविमतिपीलाशलाकैरकैञ्ज्येहिकेशिनीभ्यः ॥

काव्यः । मात्यः । पैल्यः । शालाक्यः । ऐरक्यः । ऐञ्ज्यः । ऐह्यः । कैशिन्यः ॥

शुभ्राभ्रदभ्रसुरपुरकिशोरगर्गराजमारमर्दशुष्कभङ्क-
केनवेनमृढमूकहर्दिकशालिनेभ्यः ॥

शौभ्र्यः आभ्र्यः दाभ्र्यः सौर्यः । पौर्यः । कैशोर्यः । गार्ग्यः । आजमार्यः । मार्दशुष्यः । चामङ्क्यः । इनाङ्-ऐन्यः । वैन्यः । मौढ्यः । मौक्यः । हार्दिक्यः । शालिन्यः । वेनाच्छन्दस्येवेति वृत्तिः । लोकेऽप्याह भोजः । वावदूक्य इति माधवः । सोमसुत्वरसौम्य इति दृष्टम् ॥

कर्णरथपथिसत्यंवडवीबृहतीभ्यः कारात् ॥

कार्णकार्यः । रथकार इति कारिभ्योऽन्यजातिरुक्ता । राथकार्यः पाथिकार्यः । सात्यंकार्यः । वाडवीकार्यः । बार्हतीकार्यः ॥

वान्तार्द्राभ्यां वृक्षात् ॥

वान्तवृक्ष्यः । आर्द्रवृक्ष्यः ॥

श्यावात्पुत्ररथाभ्याम् ॥

श्यावपुत्र्यः । श्यावरथ्यः ॥

शूर्पा(र्चनायां सुत ?च नायात्) ॥

चाच्छयावा(र्चः ?च)शौर्पणाय्यः । श्यावनाय्यः ॥

विराजकाद् ञ्यः ॥

वैराजकेर्गोत्रत्वाद्यूनि ण्यः । वैराजक्यः ॥

सम्राजः क्षत्रिये ॥

सम्राट्पुत्रः क्षत्रियश्चेत्साम्राज्यः । साम्राजोऽन्यः ॥

वामरथात् कण्वादियञ्वद् स्वरवर्जम् ॥

वामरथ्यः । गर्गादिगतकण्वादियञ्वत्वात् 'कण्वादिभ्यो गोत्र' इति बहुषु लुगादि स्यात् । वामरथ्यौ । वामरथाः । स्वर( स्य तु ? स्तु) ण्यस्यैव न यञ्वत् ॥

तिककितवसैन्धवशुभामित्रदेवरथनीडयज्ञयसुन्दोरसारथ्यलङ्कवेभ्यः (फिञ्) ॥

तैकायनिः । कैतवायनिः । सैन्धवायनिः । शौभायनिः । आमित्रायणिः । दैवरथायनिः । नैडायनिः । याज्ञायनिः । यासुन्दायनिः । उरसस्य-औरसायनिः । आरथ्यायनिः । लाङ्कवायनिः ॥

बालशीतग्राम्यरूप्यवरेण्योतथ्योदन्योरश्चन्द्रमस्सुयामन्सुपामन्ध्वजवद्भ्यः ॥

बालायनिः । शैतायनिः । ग्राम्यायणिः । रौप्यायणिः । वारेण्यायनिः । औतथ्यायनिः । औदन्यायनिः । उरसोऽपत्यमौरसायनिः । चान्द्रमसायनिः । सौयामायनिः । सौपामायनिः । ध्वाजवतायनिः ॥

तैनिलजाजलक्षैजयतसैकयतचौपयतचैटयतौरसकौरव्यगौकक्ष्यशाठ्यभौरिकिभौलिकिभ्यः ॥

तैतिलायनिः जाजलायनिः क्षैजयतायनिः । सैकयतायनिः । चौप(य)तायनिः । चैट(य)तायनिः । औरसायनिः कौरव्यः क्षत्रिय एव गृह्यते, कौरव्यायणिः । गौकक्ष्यायणिः । शाठ्यायनिः । भौरिकायनिः । भौलिकायनिः ॥

गङ्गासंज्ञोखाशिखावह्यकाखल्वकाशल्यकालोमकावसुकुरुभ्यः ॥

गाङ्गायनिः । साङ्गायनिः यवः । औखायनिः शैखायनिः वाह्यकायनिः खाल्वकायनिः शाल्यकायनिः लौमकायनिः वासवायनिः कौरवायणिः ॥

दगुच्छागवृषेभ्यो युट् च ॥

दागव्यायनिः छाग्यायनिः वार्ष्यायणिः ॥

वाकिनगारेधकाकल्यकाकलङ्कानाम् ॥

एषामपत्ये फिञ् कुक् च स्यात् । वाकिनकायनिः गारेधकायनिः काकल्यकायनिः काककायनिः लाङ्ककायनिः ॥

चर्मिवर्मिणोर्नलोपश्च ॥

चार्मिकायणिः । वार्मिकायणिः । 'साल्वावयवेति'ञि —

औदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥

औदुम्बरपुत्र औदुम्बरिरित्यादि । बौधिः । आजमिढिः । आजक्रन्दिरिति च भाष्योक्ताः ॥

भर्गकरूषकेकयकश्मीरकौरव्योरससाल्वसुस्थलेभ्यः ॥

एभ्यः क्षत्रियनामभ्यः तद्राजप्रत्ययस्य स्त्रियां लुङ् न । भार्गी कारूषी । कैकेयी । काश्मीरी । 'हलस्तद्धितस्ये'ति हलः परस्य तद्धितयकारस्य ईति परे लोपः स्यात् । कौरवी । औरसी । साल्वी । सौस्थली ॥

पर्शुरक्षोऽसुरपिशाचवाह्लीकदर्योवसुमरुत्सत्वद्दशार्हशानिकर्षापणत्रिगर्तभर्तोशीनरेभ्यः ॥

आयुधजीविवाचिभ्य एभ्यः स्वार्थेऽण् स्यात् । पूर्वं जनपदशब्दत्वात्, 'जनपदशब्दादि'ति, 'द्व्यञ्मगधे'ति यथार्हमणञौ । तेन

पार्शवः राक्षस इत्यादि सिद्धे पुनरनेन स्वार्थिकोऽण् । स्वरे भेदः । पार्शवः । राक्षसः । आसुरः । पैशाचः । वाल्हीकः । वायसः । वासवः । मारुतः । सात्वतः । दाशार्हः । आशनः । कार्षापणः । त्रैगर्तः । भार्तः । औशीनरः । स्त्रियाम् 'अतश्चे'ति स्वार्थिकस्याणो लुक् । आपत्य-तद्राजस्यापि तेनैव लुक् । जातित्वादूङ्-पर्शूः । रक्षाः । जातिङीप् आसुरी पिशाची वाल्हीकी वयाः । ऊङ्-वसूः । मरुत् सत्वत्-इत्यादि । एवं बहुत्वेऽप्यणो लुगूह्यः पर्शवः, रक्षसः इत्यादि ॥

यौधेयशौक्रेयशौभ्रेयज्यापनेयधार्तेयधौतेयेभ्योऽञ् ॥

आयुधजीविवाचिभ्य एभ्यः स्वार्थेऽञ् । यौधेय इत्यादि । स्वरे भेदः । स्त्रियां तु 'न प्राच्ये'ति निषेधादञो न लुक् । तेन यौधेयी शौक्रेयीत्यादि ।

यौधेयादेर्ङ्गन्तत्वाल्लुप्तेऽपि त्वञि ङीप् भवेद् ।
अलुप्ते ङीनिति भिदा स्वरमात्रस्तु भिद्यते ॥

पैलशालङ्किसात्यकिसात्यङ्काम्यौदञ्च्यौ(दम)ञ्ज्यौ-दमेध्यौ(द)शुद्धिदैवस्थानिपैङ्गलादायनिराणिराहक्षितिभौलि-ङ्ग्यौदगाहमान्यौञ्जिहानिभ्यः ॥

एभ्यः पञ्चदशभ्यो युवप्रत्ययस्य लुक् 'पीलाया वे'त्यणि पैलः । ततः 'अणो श्च' इति प्राप्तस्य फिञो लुक् । पैलो युवा । शालङ्क्यादेरिञन्तत्वाद् यञिञोश्चेति फको लुक् शालङ्किः सात्यकिः । सात्यङ्कामिरित्यादि इकारोपदावसानम् ॥

न तौल्वलिवारणिरावणिदैलीपिदैवतिदैवमतिदैवय-ज्ञिप्रादोहनिचाभट्टक्याशुरिपौष्करसाद्यानुहारतिभ्यः ॥

एभ्य इञः प्राचामिति यूनि लुङ् न स्यात् । तौल्वलायनः । वारणायनः । रावणायनः । दैलीपायनः । दैवतायनः । दैवमतायनः । दैवयज्ञायनः । प्रादोहनायनः । चाभट्टकायनः । आशुरायणः । पौष्करसादायनः । आनुहारतायनः ॥

आनुतिनैमिश्यासिबन्धकिवैङ्किपौष्याहिंसिवैरकि-वैसीतिवैहतिदैवकर्णिकाकेलिकारेणुपालिभ्यः ॥

द्वौ द्वादशकौ । आनुतायनः । नैमिशायनः । आसिबन्धकायनः । वैङ्कायनः । पौष्पायणः । आहिंसायनः । वैरकायणः । (वैसीतायनः) । वैहतायनः । दैवकर्णायनः । कार्केलायनः । कारेणुपालायनः ॥

यस्कलह्यद्रुह्यायस्थूणतृणकर्णभलन्दनमित्रयुखरप-भटिलभण्डिलभडितभण्डितेभ्यः ॥

एभ्योऽपत्ये बहुषु लुक् । आ(र्षः १ द्याः षट्) शिवादयः । मित्रयु-र्गृष्ट्यादिः । खरपो नडादिः । परे चत्वारोऽश्वादयः । यास्कः यास्कौ यस्काः, एवं लह्याः, द्रुह्याः, अयस्थूणाः, तृणकर्णाः भलन्दनाः । मैत्रेयः, मित्रयवः । खारपायणः, खरपाः । भाटिलायनः, भटिलाः । भण्डिलाः । भडिताः । भण्डिताः ॥

सदासत्तकम्बलहारकर्णाटपर्णाटपिण्डीजङ्घबकसक्थ-रक्षोमुखजङ्घारथोत्काशकद्रुमन्थकविषपुटेभ्यः ॥

एभ्यो द्वादशभ्योऽत इञो लुक् । सादासत्तिः, सदासत्ताः । कम्बलहाराः । कर्णाटाः । पर्णाटाः । पिण्डीजङ्घाः । बकसक्थाः । रक्षोमुखाः । जङ्घारथाः । उत्काशाः । कद्रुाः । मन्थकाः । विषपुटाः ॥

वर्षुकोपरिमेखलकलसकूपपटाकपुष्करसदुत्कुञ्जि-विश्रयजवस्तिभ्यः ॥

आदौ चतुर्भ्योऽत इञ् । पुष्करसद् बाह्वादिः । कक्कु(ञ्जि)र्विश्रिर-जवस्तिश्च गृष्ट्यादयः । वार्षुकिः वर्षुकाः । उपरिमेखलाः । कलसकूपाः । पटाकाः । पौष्करसादिः, पुष्करसदः । काकुञ्जेयः, कक्कु(ञ्ज)यः । विश्रयः । अजवस्तयः ॥

कोष्टोः पादमानाभ्याम् ॥

आभ्यामिञो लुक् । कौष्टुपादिः, कोष्टुपादाः । कौष्टुमानाः ।

शीर्षाच्च मायाव ॥

चास्कोष्टोश्च अनयोरपीञ् । क्रौष्टुमायिः क्रोष्टुमायाः । शीर्षमायाः ॥

तिककितवावुञ्जककुभौ वङ्खरभण्डीरथौ प्रहितनरकावग्निवेशदाशेरकौ बकनखगुदपरिणद्धौ लङ्कशान्तमुखावुरसलङ्कटौ ॥

आद्ययोस्तिकादिफिञ् । ककुभाच्छिवाद्यण् । अग्निवेशाद् गर्गादियञ् । उरसात्तिकादिफिञ् । शेषेभ्योऽत इञ् । एभ्यो द्वन्द्वे लुक् । तैकायनः कैतवायनश्च तिककितवाः । औञ्जयः काकुभाश्च उञ्जककुभाः । वाङ्खरयो भाण्डीरथयश्च वङ्खभण्डीरथाः । प्राहितयो नारकयश्च प्रहितनरकाः । आग्निवेश्या दाशेरकयश्च अग्निवेशदाशेरकाः । बाकनखयो गौदपरिणद्धयश्च । बकनखगुदपरिणद्धाः । लाङ्कयश्शान्तमुखयश्च लङ्कशान्तमुखाः । औरसायनयो लाङ्कटयश्च उरसलङ्कटाः ॥

उपकलमकौ भ्रष्टालकपिष्ठलौ कृष्णाजिनकृष्णसुन्दरौ पिङ्गलकृष्णपिङ्गलौ कलशीकण्ठदासकण्ठौ जटिलकबधिरकौ जतुकगडुकौ निदाघावदग्धावडारक(मण्ठा ? चडा)रकौ प्रतिलोमानुलोमौ प्रतानानुपदावनभिहितखरीजङ्घौ कशकृत्सुधायुकौ कर्णकपर्णकौ कुशीतकलेखाभ्रुवौ शलाथलपिष्टौ सुपिष्टमयूरकर्णौ कठेराणिपतञ्जली इति ॥

एष्वाद्यौ न(ड्वादि ? डादी ।) लेखाभ्रुशलाथलयोरशुभ्रादिढक् पिष्टसुपिष्टमयूरकर्णेभ्यः शिवाद्यण् । अन्त्ययोरौत्सर्गिकोऽण् । शिष्टेभ्योऽत इञ् । एभ्यस्सर्वेभ्यो द्वन्द्वे चाद्वन्द्वे च बहुत्वे लुगिति भाष्ये । आद्यानां त्रयाणां द्वन्द्वे नित्यमिति । वृद्धिः, औपकायनाः लामकायनाश्च, उपकलमकाः, औपकायनलामकायनाः इति द्वन्द्वे । उपकाः औपकायना द्वन्द्वेऽपि । एवमन्येष्वप्यूह्यम् । भ्राष्टाकयः कापिष्ठलयः कार्ष्णाजिनयः कार्ष्णसुन्दरयः पैङ्गलयः कार्ष्णपि-

ङ्गलयः कालशीकण्ठयः दासकण्ठयः जाटिलकयः बाधिरकयः जातुकयः गाडुकयः नैदाघयः आवदग्धयः आडारकयः चाडारकयः प्रातिलोमयः आनुलोमयः प्रातानयः आनुपदयः आनभिहितयः खारीजङ्घयः काशकृत्स्नयः सौधायुकयः कार्णकयः पार्णकयः कौशीतकयः हैखा(ग्रे ? ग्रवे)याः शालाथलेयाः बैष्टाः सौपिष्टाः मायूरकर्णाः काठेरणाः पातञ्जलाः इति ॥

कौडिलाडिव्याड्यावििक्षित्यापिशलिसौधातकि(धौतकि?)भौरिकिभौलिकिशाल्मलिशालास्थलिकापिष्ठलिदैवदत्त्यादीनाम् ॥

एषां स्त्रियां ष्यङ् स्यात् । कौड्या लाड्या व्याड्या आविक्षित्या आपिशल्या सौधातक्या भौरिक्या भौलिक्या शाल्मल्या शालास्थल्या कापिष्ठल्या दैवदत्त्या ॥

चौपयतचैकयतचैटयतबैल्वयतसैकयतानाञ्च ॥

चौपयत्या चैकयत्या चैटयत्या बैल्वयत्या सैकयत्या इति ॥

---

## ॥ अथ तद्धिते रक्ताद्यर्थाः ॥

तेन रक्तं रागात् ( ४. २. १ )

रागो रञ्जनसाधनं, तद्वाचकात् तेन रक्तमित्यर्थेऽण् स्यात् । कुसुम्भेन रक्तं कौसुम्भं वसनम् । काषायम् ॥

वर्णाभ्यां द्वाभ्यां रक्तमित्यर्थे द्विवर्ण, अण्—

द्विगोर्लुगनपत्ये ( ४. १. ८८ )

संख्यापूर्वः समासो द्विगुः । द्विगुसम्बन्धिनः प्राग्दीव्यतीयप्रत्ययस्यापत्यार्थादन्यत्र लुक् स्यात् । द्विवर्णः पटः । अपत्ये तु न लुक् । द्वयोः पुरुषयोरपत्यं द्वैपुरुषिः ।

---

1. 'स्याद', ग. पाठः

लाक्षारोचनाशकलकर्दमाट्ठक् (४. २. २)

ठस्येकः। कित्त्वाद् वृद्धिः। लाक्षया रक्तं लाक्षिकम्। रौचनिकम्। शाकलिकम्। कार्दमिकम्। अन्त्याभ्यामणपीष्टः। शाकलम्। कार्दमम्। 'नील्या अन् वाच्यः' नील्या रक्तं नीलम्। शुक्लस्य वर्णान्तरकरणमेवात्र रञ्जनम्। तेन नील्यादेरपि स्यात्॥ 'पीतात् कन्' पीतकम्। 'हरिद्रामहारजनाभ्यामञ् वाच्यः'॥ हारिद्रम्। माहारजनम्। महारजनं कुसुम्भम्॥

नक्षत्रेण युक्तः कालः (४. २. ३)

नक्षत्रवाचिभ्यस्तेन युक्तः काल इत्यर्थेऽण् स्यात्। कृत्तिकाभिर्युक्तं कार्त्तिकम् अहः॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः (६. ४. १४९)

सूर्यादिशब्दसम्बन्धी भसंज्ञस्योपधास्थितः।
यकारो लुप्यते तेन तैषं तिष्ययुतं दिनम्॥
नक्षत्रगामिन्यपि तिष्यपुष्ययोश्चे ङ्यां च लोपोऽयमगस्त्यसूर्ययोः।
क्यामिव मत्स्यस्य भवेदितीरणाद् व्यनाशि सूत्रं प्रविभज्य वार्तिके॥
तिष्यपुष्ययोरित्युक्त्या पौषं दिनमित्यपि॥

लुबविशेषे (४. २. ४)

कालस्य दिनादिविशेषानुक्तौ प्रत्ययस्य लुप् स्यात्॥

लुपि युक्तवद् व्यक्तिवचने (१. २. ५१)

प्रत्ययस्य लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। कृत्तिकाभिर्युक्तः कालः कृत्तिकाः। कृत्तिकासु कर्म कृतम्। विशेषोक्तौ तु न लुप् कार्त्तिकमहः॥

संज्ञायां श्रवणाश्वत्थाभ्याम् (४. २. ५)

आभ्यां तेन युक्त इति जातस्याणः संज्ञायां लुप् स्यात्। श्रवणा पौर्णमासी। श्रावणीत्यपीष्टम्। अश्विनीनक्षत्रमश्वत्थः। तद्युक्तोऽश्वत्थो मुहूर्तः॥

द्वन्द्वाच्छः (४. २. ६)

नक्षत्रद्वन्द्वाद् युक्तेऽर्थे छः स्यात् । ज्येष्ठामूलीयमहः । ज्येष्ठामूलीये कर्म कृतम् ॥

दृष्टं साम (४. २. ७)

तेन दृष्टं सामेत्यर्थेऽण् स्यात् । वसिष्ठेन दृष्टं साम वासिष्ठम् ।

कलेर्ढक् (४. २. ८)

कलिना दृष्टं साम कालेयम् । 'दृष्टे सामन्यण् वा डिद् वाच्यः' । डित्वे टिलोपः । उशनसा दृष्टमौशनं साम । औशनसम् ।

गोत्रात् तस्येदमर्थे यो वुञादिः स इहेष्यते ।
दृष्टमौपगवेनेति सामौपगवकं भवेत् ॥

वामदेवाड्ड्यड्ड्यौ (४. २. ९)

वामदेव्यमिदं साम ज्ञतास्तित्त्वात् स्वरे भिदा ।
यस्येति लोपतः सिद्धेर्डित्फलं चोभयोः स्वरे ॥

'तीयादीकक् स्वार्थे वा वाच्यः' (वा० ४. २. ८) द्वैतीयीकं द्वितीयं, तार्तीयीकं तृतीयम् । 'न विद्यायाः' (वा० ४.२.८) द्वितीया विद्या ॥

परिवृतो रथः ( ४. २. १० )

तेनाच्छादितो रथ इत्यर्थेऽण् स्यात् । वस्त्रेणाच्छादितो वास्त्रो रथः । चार्मणमनः । शकटाद्यपि रथत्वेन मन्यते ॥

पाण्डुकम्बलादिनिः (४. २. ११)

गजास्तरणार्थो वर्णकम्बलः पाण्डुकम्बलः । तदाच्छादितो रथः पाण्डुकम्बली ॥

द्वैपवैयाघ्रादञ् ( ४. २. १२ )

द्वीपिचर्म द्वैपं, तदेव वैयाघ्रम् । आभ्यामुक्तेऽर्थेऽञ् । द्वैपो रथः । वैयाघ्रः ॥

कौमारापूर्ववचने ( ४. २. १३ )

अपूर्वत्वे द्योत्येऽण्णन्तः कौमारशब्दो निपात्यते। अनन्यपूर्वां कुमारीमूढवान् कौमारः पतिः। अनन्यपूर्वा पतिं प्राप्ता सा कुमार्येव (चा) कौमारीत्युभयत्रापि, स्त्रिया अपूर्वत्वमिष्टं वृत्त्यादौ। शृङ्गारे सूक्तं —

'कौमारी सा भवेद् भार्या यां कुमारः प्रपद्यते।
प्रपद्यते कुमारी यं स कौमारो मतः पतिः॥'

इति। अत्रानूढभार्यस्याद्या भार्या कौमारीति भेदः॥

तत्रोद्धृतममत्रेभ्यः (४. २. १४)

भुक्तशिष्टमुद्धृतं, पात्रवाचिभ्योऽस्मिन्नर्थेऽण्। कंसे भुक्तशिष्टमन्नं कांसम्। स्थाली चेत् स्थालम्॥

स्थण्डिलाच्छयितरि व्रते (४. २. १५)

स्थण्डिलशब्दात् तत्र शयितर्यर्थे व्रते द्योत्येऽण्। व्रतेन स्थण्डिले[1] शयिता स्थाण्डिलः॥

संस्कृतं भक्षाः (४. २. १६)

तत्र संस्कृतमित्यर्थेऽण् भक्षाश्चेत् संस्कृता इह।
दन्तैर्भक्ष्यं भक्षमाहुः पैठरास्तिलतण्डुलाः॥

शूलोखाद् यत् (४. २. १७)

शूले संस्कृतं शूल्यं मांसम्। उखायां चेद्, उख्यम्॥

दध्नष्ठक् (४. २. १८)

इकः। 'यस्येति च'। दाधिकाः सक्तवः॥

उदश्वितोऽन्यतरस्याम् (४. २. १९)

अस्माद् वा ठक्॥

इसुसुक्तान्तात् कः (७. ३. ५१)

इस् उस् इत्यन्तादुगन्तात् तकारान्ताच्च परस्य ठस्य कः स्यात्। औदश्वित्कः। तत्र संस्कृतमौदश्वित्कम्। अणि, औदश्वितम्॥

१. 'ले' ङ. च. पाठः.

क्षीराड्ढञ् (४. २. २०)

क्षीरे संस्कृतः क्षैरेयः पृथुकः । संस्कृतत्वमात्रमत्रेष्टं न भक्ष्यत्वमिति रामः । तेन क्षैरेयी आणेत्यपीदम् । क्षीरस्य आणातः पृथक्त्वविवक्षया तत्र संस्कृतत्वं नेयम् ॥

सास्मिन् पौर्णमासीति संज्ञायाम् (४. २. २१)

पौर्णमासीवाचकेभ्यः सास्मिन्नस्तीत्यर्थे नाम्न्यण् स्यात् । पौषी पौर्णमास्यस्मिन्नस्तीति पौषो मासः । पूर्णो माश्चन्द्रः तत्सम्बन्धिनी पौर्णमासीति तत्सिद्धिः ॥

आग्रहायण्यश्वत्थाट्ठक् (४. २. २२)

आग्रहायणी पौर्णमास्यस्मिन्नस्तीत्याग्रहायणिको मासः । अश्विनीयुक्ता पौर्णमास्यश्वत्थः । तद्वान्मासो आश्वत्थिकः ।

विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः (४. २. २३)

फाल्गुनी पौर्णमास्यस्मिन्नस्तीति फाल्गुनिकः फाल्गुनो वा मासः । इत्यादि ॥

सास्य देवता (४. २. २४)

अस्मिन्नर्थेऽणादयः स्युः । इन्द्रो देवतास्येत्यैन्द्रम् । अश्वपत्यादित्वाद् गाणपतम् । पाशुपतम् । अदितिदेवत्यम् आदित्यम् । आदित्यदेवत्यमपि तथा । बार्हस्पत्यम् । वाजिदेवत्यं वाजिनमित्यण् । अत्र 'नस्तद्धिते' (६-४-१४४) इति टिलोपे प्राप्ते —

इनण्यनपत्ये (६. ४. १६४)

अनपत्येऽणि परे इन् प्रकृत्या स्यात् । अपत्ये तु मैधाव इति टिलोप एव ॥

मघवा बहुलम् (६. ४. १२८)

मघवन्नित्यङ्गस्य बहुलं तृ इत्यन्तादेशः स्यात् । ऋकार उगित्कार्यार्थः । माघवतं माघवनम् । अत्र 'अन्' (६-४-१६७) इति प्रकृतिभावः ॥ इन्द्राविष्णू देवतास्येत्यण् —

१. 'पि । क्षी' क. पाठः ।

देवताद्वन्द्वे च ( ७. ३. २१ )

वृद्धिहेतुतद्धिते परे देवताद्वन्द्वे उभयपदवृद्धिः स्यात् । ऐन्द्रावैष्णवम् । पत्युत्तरपदत्वाण्ण्ये वृद्धिः । ऐन्द्राबार्हस्पत्यम् ॥

नेन्द्रस्य परस्य ( ७. ३. २२ )

परस्येन्द्रस्य वृद्धिर्न । सौमेन्द्रम् ॥

दीर्घाच्च वरुणस्य ( ७. ३. २३ )

दीर्घात् परस्य वरुणस्य वृद्धिर्न । ऐन्द्रावरुणम् । दीर्घादित्युक्तेराग्निवारुणम् इति ॥

कस्येत् ( ४. २. २५ )

कशब्दादुक्तार्थेऽण् स्यात् । इत्वान्तादेशः । कि अ, वृद्ध्यायादेशौ । को देवतास्येति कायं हविः ॥

शुक्राद् घन् ( ४. २. २६ )

घस्य इय् शुक्रदेवत्यं शुक्रियम् ॥

अपोनप्त्रपान्नप्तृभ्यां घः ( ४. २. २७

अपोनप्त्रियम् । अपान्नप्त्रियं[1] हविः । घघनोः स्वरे भेदः ॥

छ च (४. २. २८ )

ताभ्यां छ च स्यात् । अपोनप्त्रीयम् । अपान्नप्त्रीयम् । 'पैङ्गाक्षिपुत्रादिभ्यश्च वाच्यम्' । पैङ्गाक्षिपुत्रीयं तदेवत्यम् । 'शतरुद्राच्छश्च घश्च' (वा० ४-२-२८) शतरुद्रीयं, शतरुद्रियम् ॥

महेन्द्राद् घाणौ च (४. २. २९)

छ च स्यात् । महेन्द्रियम् । माहेन्द्रम् । महेन्द्रीयम् ॥

सोमाट्ट्यण् (४. २. ३०)

सौम्यं हविः । टित्त्वात् ङीप् ॥

हलस्तद्धितस्य ( ६. ४. १५० )

१. 'यं वा द' क. पाठः. २. 'आ' ग पाठः. ३. 'क्षी' क. ख. पाठ .

हलः परस्य तद्धितयकारस्य ईति परे लोपः स्यात् । यस्येति-लोपः । सौमी ऋक् ॥

वाय्वृतुपित्रुषसो यत् ( ४. २. ३१ )

ओर्गुणः । 'वान्तो यि–' (६-१-७९) इत्यवादेशः । वायव्यम् । ऋतव्यम् ।

रीङ् ऋतः ( ७. ४. २७ )

अकृत्सार्वधातुकाभ्याम् अन्यस्मिन् यादौ प्रत्यये च्वौ च परे ऋदन्तस्य रीङ् स्यात् । ङित्वादन्त्यस्य । पित्री य । 'यस्येति च' । पित्र्यम् । उषस्यम् ।

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ( ४. २. ३२ )

एभ्यश्छ च यच्च स्यात् । द्यावापृथिवीयम् द्यावापृथिव्यम् । शुनासीरौ वायुसूर्यौ, तद्देवत्यं शुनासीरीयं शुनासीर्यम् । मरुत्वतीयम् मरुत्वत्यमित्यादि ॥

अग्नेर्ढक् ( ४. २. ३३ )

आग्नेयम् । अग्नाग्नीदेवत्यमप्याग्नेयम् । 'भस्याढे' (वा० ६-३-३) इत्यनेन स्त्रीभ्यो ढक्येव पुंवत्त्वनिषेधादिह पुंवत्त्वम् ॥

कालेभ्यो भववत् ( ४. २. ३४ )

भवार्थे 'कालाट्ठञ्' (४-३-११) इत्यादयो वक्ष्यन्ते । तेऽत्रापि स्युः । ठञि मासदेवत्यं मासिकम् ॥

प्रावृष एण्यः ( ४. ३. १७ )

प्रावृषेण्यम् ॥

महाराजप्रोष्ठपदाट्ठञ् ( ४. २. ३५ )

महाराजः कुबेरः । तद्देवत्यं माहाराजिकम् । प्रौष्ठपदिकं नक्षत्र-देवत्यम् । 'तदस्मिन् वर्तते इति नक्षत्रादिभ्यश्छश्च वाच्यः' (वा०)। नक्षत्र-

॥

न आग्रयणं, तदस्मिन् वर्तते इति नावयज्ञिकः शरत्कालः। पाकयज्ञिकं गृहम्॥

पितृव्यमातुलमातामहपितामहाः (४. २. ३६)

एते निपात्यन्ते। 'अन्त्ययोः पित्वं वाच्यम्। मातामही। पितामही।'अवेर्दुग्धे सोढदूसमरीसचः' । अवेः क्षीरमविसोढम्। अत्र प्रत्ययसस्य षत्वं नेष्टम्। एवम्, अविदूसम्। अविमरीसम्। 'तिलान्निष्फलात् पिञ्जपेजौ'। फलशून्यो व्यर्थो वा तिलस्तिलपिञ्जः। तिलपेजः॥

तस्य समूहः (४. २. ३७)

षष्ठ्यन्तात् समूहार्थेऽणादिः स्यात्। काकानां समूहः काकम्। बाकम्।

भिक्षादिभ्योऽण् (४. २. ३८)

एभ्यो वक्ष्यमाणबाधकोऽण् स्यात्। भिक्षाक्षेत्रकरीषगर्भिणीदक्षिणाङ्गारसहस्राथर्वन्चर्मन्युवतिपदातिपद्धतिभ्यः। भिक्षासमूहो भैक्षम्। क्षैत्रम्। कारीषम्। 'भस्याढे तद्धिते' इति पुंवत्त्वाद् गर्भिण्या ङीब्निवृत्तिः। गर्भिन् अ। 'इनण्यि'ति (६-४-१६४) प्रकृतिभावः। गार्भिणम्। दक्षिणासमूहो दाक्षिणम्। आङ्गारम्। साहस्रम्। आथर्वणम्। चार्मणम्। युवतेरिह पुंवत्त्वं नेष्टम्। यौवतं यौवनम्। पादातं पाद्धतम्।

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् (४. २. ३९)

अपत्याधिकारादन्यत्र गोत्रशब्दोऽपत्यमात्रार्थः। औपगवानां समूह औपगवकम्। एवं, गार्ग्य अक —

आपत्यस्य च तद्धितेऽनाति (६. ४. १५१)

अनाकारादौ तद्धिते परे हलः परस्यापत्ययकारस्य लोपः स्यात्। गार्गकम्। आकारादौ तु गार्ग्यायण इति यलोपो न। औक्ष-

कम् । औष्ट्रकम् । उरभ्रो मेषः । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । 'वृद्धाच्चेति वाच्यम्' । वार्धकम् । राजन्यमनुष्ययोः 'आपत्यस्य' इति यलोपे प्राप्ते । 'प्रकृत्याके राजन्यमनुष्ययुवानः' (वा०. ६. ४. १६३) इति प्रकृतिभावः । सामूहिके तदन्तविधिरिष्यते । कौरुराजकम् । गौवत्सकम् ।

केदाराद् यञ्च (४. २. ४०)

वुञ्च स्यात् । कैदार्यम् । कैदारकम् ॥ (वा०) 'गणिकायाश्च यञ् वाच्यः' ॥ गाणिक्यम् ॥

ठञ् कवचिनश्च (४. २. ४१)

अस्मात् केदाराच्च समूहे ठञ् । 'नस्तद्धिते' । कावचिकम् । कैदारिकम् ॥

ब्राह्मणमाणववाडवाद्यत् (४. २. ४२)

ब्राह्मणसमूहो ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । 'वृषाच्चेष्यम्' । वृषसमूहो वृष्यम् । 'अह्नः खः क्रतौ' (वा०) अहन् ईन् —

अह्नष्टखोरेव (६. ४. १४५)

अनयोः परयोरेव टिलोपः स्यात् । अह्नां समूहरूपः क्रतुः, अहीनः । 'पृष्ठाद् यः' पृष्ठाख्यानां साम्नां समूहरूपः क्रतुः पृष्ठ्यः । पृष्ठाख्यानां समूहः, पृष्ठ्यमित्यन्ये (वा०) 'पर्शोर्णस् वाच्यः' ॥

सिति च (१. ४. १६)

सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात्, इति पदत्वेन भत्वाभावाट्टिलोपो न । पार्श्वमिति पर्शवः । समूहे, पार्श्वम् ॥

ग्रामजनबन्धुसहायेभ्यस्तल् (४. २. ४३)

प्र आग्रयणं, तदस्मिन् वर्तत इति नावयज्ञिकः शरत्कालः । पाकयज्ञिकं गृह्यम् ॥

पितृव्यमातुलमातामहपितामहाः (४. २. ३६)

एते निपात्यन्ते । 'अन्त्ययोः पित्वं वाच्यम् । मातामही । पितामही । 'अवेर्दुग्धे सोढदूसमरीसचः' । अवेः क्षीरमविसोढम् । अत्र प्रत्ययसस्य षत्वं नेष्टम् । एवम् , अविदूसम् । अविमरीसम् । 'तिलान्निष्फलात् पिञ्जपेजौ' । फलशून्यो व्यर्थो वा तिलस्तिलपिञ्जः । तिलपेजः ॥

तस्य समूहः (४. २. ३७)

षष्ठ्यन्तात् समूहार्थेऽणादिः स्यात् । काकानां समूहः काकम् । बाकम् ।

भिक्षादिभ्योऽण् (४. २. ३८)

एभ्यो वक्ष्यमाणबाधकोऽण् स्यात् । भिक्षाक्षेत्रकरीषगर्भिणीदक्षिणाङ्गारसहस्राथर्वन्चर्मन्युवतिपदातियद्धतिभ्यः । भिक्षासमूहो भैक्षम् । क्षैत्रम् । कारीषम् । 'भस्याढे तद्धिते' इति पुंवत्त्वाद् गर्भिण्या ङीब्निवृत्तिः । गर्भिन् अ । 'इनण्यी'ति (६-४-१६४) प्रकृतिभावः । गार्भिणम् । दक्षिणासमूहो दाक्षिणम् । आङ्गारम् । साहस्रम् । आथर्वणम् । चार्मणम् । युवतेरिह पुंवत्त्वं नेष्टम् । यौवतं यौवनम् । पादातं पाद्धतम् ।

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् (४. २. ३९)

अपत्याधिकारादन्यत्र गोत्रशब्दोऽपत्यमात्रार्थः । औपगवानां समूह औपगवकम् । एवं, गार्ग्य अक —

आपत्यस्य च तद्धितेऽनाति (६. ४. १५१)

अनाकारादौ तद्धिते परे हलः परस्यापत्ययकारस्य लोपः स्यात् । गार्गकम् । आकारादौ तु गार्ग्यायण इति यलोपो न । औक्ष-

कम् । औष्ट्रकम् । उरभ्रो मेषः । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । 'वृद्धाच्चेति वाच्यम्' । वार्धकम् । राजन्यमनुष्ययोः 'आपत्यस्य' इति यलोपे प्राप्ते । 'प्रकृत्याके राजन्यमनुष्ययुवानः' (वा०, ६. ४. १६३) इति प्रकृतिभावः । सामूहिके तदन्तविधिरिष्यते । कौरुराजकम् । गौवत्सकम् ।

केदाराद् यञ्च (४. २. ४०)

वुञ्च स्यात् । कैदार्यम् । कैदारकम् ॥ (वा०) 'गणिकायाश्च यञ् वाच्यः' ॥ गाणिक्यम् ॥

ठञ् कवचिनश्च (४. २. ४१)

अस्मात् केदाराच्च समूहे ठञ् । 'नस्तद्धिते'। कावचिकम् । कैदारिकम् ॥

ब्राह्मणमाणववाडवाद्यत् (४. २. ४२)

ब्राह्मणसमूहो ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । 'वृषाच्चेष्यम्'। वृषसमूहो वृष्यम् । 'अह्नः खः क्रतौ' (वा०) अहन् ईन् —

अह्नष्टखोरेव (६. ४. १४५)

अस्य टखयोः परयोरेव टिलोपः स्यात् । अह्नां समूहरूपः क्रतुः, अहीनः । 'पृष्ठाद् यः' पृष्ठाख्यानां साम्नां समूहरूपः क्रतुः पृष्ठ्यः । पृष्ठास्थ्नां समूहः, पृष्ठ्यमित्यन्ये (वा०) 'पर्शोर्णस् वाच्यः' ॥

सिति च (१. ४. १६)

सिति प्रत्यये परे पूर्वं पदाख्यम्, इति पदत्वेन भत्वाभावादोर्गुणो न । पार्श्वास्थीनि पर्शवः । तत्समूहः, पार्श्वम् ॥

ग्रामजनबन्धुसहायेभ्यस्तल् (४. २. ४३)

तलन्तं स्त्रियामेव । ग्रामसमूहो, ग्रामतेत्यादि । 'गजाच्चेति वाच्यम्' (वा०) । गजता ॥

अनुदात्तादेरञ् (४. २. ४४)

अनुदात्तादित्वं स्वरशास्त्रगम्यम् । कापोतम् । मायूरम् । तैत्तिरम् ॥

खण्डिकादिभ्यश्च (४. २. ४५)

अञ् स्यात् । खण्डिकाहन् हलबन्धयुगवरत्राबडवाभिक्षुकशुकोलूकश्वभ्यः ॥ खण्डिका दात्रं, तत्समूहः खाण्डिकम् । 'अह्नष्टखोरेवे' (६. ४. १४५)ति, नियमादिह टिलोपाभावः ।

अल्लोपोऽनः (६. ४. १३४)

अन्नन्तस्य भस्याल्लोपः स्यात् । अह्नां समूहः आह्नम् । हालबन्धम् । युगवरत्रेति व्यस्तं समस्तं च । यौगम् । वारत्रम् । यौगवरत्रम् । अनणूत्वाद् 'अनि' (६. ४. १३०)ति प्रकृतिभावो न । द्वारादित्वादैच् । शौवम् । 'क्षुद्रकमालवात् सेनायाम्' (ग.) क्षुद्रका मालवाश्च क्षत्रियाः । तेषां समूहरूपा सेना क्षौद्रकमालवी ।

चरणेभ्यो धर्मवत् (४. २. ४६)

'तस्येद'(४. ३. १२०)मित्यारभ्य तस्य धर्म इत्यर्थे चरणेभ्यो वुञ्, छन्दोगादेर्ञ्यः इत्यादि वक्ष्यते । तत्समूहेऽपि तथैव स्यात् । शाखाभेदकर्तारः कठादिसंज्ञाश्चरणाख्याः । वुञि, कठानां समूहः काठकम् । छन्दोगानां छान्दोग्यमित्यादि ॥

अचित्तहस्तिधेनोष्ठक् (४. २. ४७)

अचेतनेभ्यः, आपूपिकम् । पार्वतिकम् । 'नस्तद्धिते' हास्तिकम् । उगन्तात्ठस्य कः । धैनुकम् । सामूहिके तदन्तविधिर्धुक्तेर्यानहास्तिकम् । मृधेनूनां समूह इत्यत्र —

१. 'स्त्रादिषे' म. पाठः । २. 'ख. पाठः', 'क' म. पाठः.

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् (७. ३. २५)

एतत्त्रयान्तस्याङ्गस्य वृद्धिनिमित्ततद्धिते परे पूर्वपदस्य वृद्धिः स्यात् उत्तरपदस्य तु वा स्यात् । सौधेनुकम् सौधैनुकम् । 'धेनोरनञ इति वाच्यम्' (वा०) इति ठगभावेऽणि प्राग्वत् वृद्धिः । आधैनवम् आधेनवम् ॥

केशाश्वाभ्यां यञ्छावन्यतरस्याम् (४. २. ४८)

आभ्यां क्रमात् यञ्छौ वा स्तः । कैश्यम् । अचित्तत्वाट्ठकि कैशिकम् । आश्वीयम् । आश्वम् ॥

पाशादिभ्यो यः (४. २. ४९)

पाशतृणधूमाङ्गारखलवातपिटकपिटाकपटाकशकटहलनडवनेभ्यश्च समूहे यः । 'इनित्रकट्यचश्च' इति लिङ्गशास्त्रात् स्त्रीत्वम् । पाशानां समूहः, पाश्या । तृण्या । धूम्या । अङ्गार्या । शलं शल्यरोम, शल्या । पटाकः पताका, पटाक्या । टीकासर्वस्वे तु गलसमूहो गल्या । पोटगलो नलतृणं, तत्समूहः पोटगल्येति चोक्तम् ॥

खलगोरथात् (४. २. ५०)

एभ्योऽपि यः स्यात्[1] । खलगणः, खल्या । गव्या । रथ्या ॥

इनित्रकट्यचश्च (४. २. ५१)

खलादेः क्रमादेते च स्युः । प्राग्वत् स्त्रीत्वम् । खलिनी गोत्रा । रथकट्या । 'इनित्रकट्यचश्चोऽपि' । उलूकिनी । रथिनी 'ऊकोन्दुमौ समूहार्थौ' । समूहस्यानेकविवक्षायाम् ' ऊकिनी । इन्दुभिनी ॥

विषयो देशे (४. २. ५२)

कस्यचिन्नियतोऽर्थो विषयः । षष्ठ्यन्तात् तस्य नियतो देश इत्यर्थेऽण् स्यात्[2] । शिबीनां देशः, शैबः ॥

---

१. 'भ्यो सः' क. ख. पाठः. २. 'शौ । तत्सम्' क. पाठः.

## राजन्यादिभ्यो वुञ् (४. २. ५३)

राजन्यानां तु नियतो देशो राजन्यकः स्मृतः ।
एवं मालवकस्त्रैगर्तकः शैलूषकस्तथा ॥
शालङ्कायनको बाभ्रव्यको वैराटकादयः ।

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ (४. २. ५४)

क्रमात् स्तः । भौरिकीणां देशो, भौरिकिविधः । भौलिकिविधः । ऐषुकारिभक्तः । सौवीरभक्त इत्यादि ॥

## सोऽस्यादिरिति च्छन्दसः प्रगाथेषु (४. २. ५५)

छन्दोवाचिभ्यः सोऽस्यादिरित्यर्थे प्रगाथे वाच्येऽण् स्यात् । अनुष्टुब् आदिर्यस्य प्रगाथस्य स आनुष्टुभः । बार्हतः । ऋक्सङ्घातः प्रगाथाख्यः । (वा०) 'छन्दसः स्वार्थे क्लीबेऽण् वाच्यः' । अनुष्टुबेवानुष्टुभम् । गायत्रम् ॥

## संग्रामे प्रयोजनयोद्धृभ्यः (४. २. ५६)

सोऽस्य प्रयोजनं सोऽस्य योद्धेति चार्थे सङ्ग्रामे वाच्ये अणादिः स्यात् । सुभद्रा प्रयोजनमस्य, सौभद्रो रणः । भरता योद्धारोऽस्य, भारतं युद्धम् । एवं स्त्रीप्रयोजनः स्त्रैणो रणः ॥

## तदस्यां प्रहरणमिति क्रीडायां णः (४. २. ५७)

तदस्यां प्रहरणसाधनमित्यर्थे, क्रीडायां वाच्यायां णः स्यात् । अणि ङीब्भयाण्ण उक्तः । दण्डः प्रहरणमस्यां क्रीडायामिति दाण्डा । मौष्टा ॥

श्येनतिलस्य पाते ञे (६. ३. ७१)

ञान्ते पातशब्दे परेऽनयोर्मुम् स्यात्। श्येनपातोऽस्यामस्तीति श्यैनम्पाता मृगया। तैलम्पाता पितृक्रिया॥

तदधीते तद्वेद (४. २. ५९)

अनयोरर्थयोरण् स्यात्। प्रायेण ग्रन्थपरेभ्य एवेष्टम्। व्याकरणमधीते वैयाकरणः। 'न य्वाभ्याम्—'(७. ३. ३) इत्यैच्। निमित्तं वेद नैमित्तः। तैतिल्यादिभिः कृतास्तैतिलिजाजलिलाङ्गलिनो नाम ग्रन्थाः। तानधीत इत्यणि 'इनण्यन—'(६. ४. १६४) ति प्रकृतिभावे प्राप्ते, 'सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणां टिलोपो वाच्यः' ॥ (वा० ६. ४. १४४) तैतिलः। जाजलः। लाङ्गलः। द्वौ वेदावधीते द्विवेदः। 'द्विगोर्लुगनपत्ये'(४. १. ८८) इत्यणो लुक्॥

क्रतूक्थादिसूत्रान्ताट्ठक् (४. २. ६०)

क्रतुनाम्न उक्थादेः सूत्रान्ताच्चार्थद्वये ठक् स्यात्। अग्निष्टोममधीते वेद वेत्याग्निष्टोमिकः। वाजपेयिकः। क्रतुभिस्तद्विधिभागो लक्ष्यते। उक्थाख्यं सामलक्षणमधीते वेद वा औक्थिकः। सूत्रान्तात्—साङ्ग्रहसूत्रिकः। 'कल्पसूत्रात् त्वणिष्टः'। काल्पसूत्रः। उक्थादि(भ्य)स्तु 'उक्थलोकायतन्यायन्यासपुनरुक्तयज्ञचर्चाक्रमेतरश्लक्षणसंहितासङ्घाटपदक्रमेभ्यः'। औक्थिकः। लौकायतिकः। ऐच्, नैयायिकः। नैयासिकः। पुनरुक्तस्य लक्षणमधीयानः पौनरुक्तिकः। याज्ञिकः। चर्चा विचारग्रन्थः। चार्चिकः। क्रमादन्यत् सर्वमधीते क्रामेतरिकः। श्लाक्ष्णिकः। सांहितिकः। सांघाटिकः। तुल्यौ। पादक्रमिकः[1]। 'वृत्तिसङ्ग्रहायुर्वेदगुणगणात्पदद्विपदज्योतिषगणितानुलोक्यलक्षणेभ्यः'। वार्त्तिकः। साङ्ग्रहिकः। आयुर्वेदिकः। गुणञ्जिगुणीति हरः। गौणिकः। गण-

1. 'त्तिकः' ख. पाठः. 2. 'ज्ञ' क. पाठः.

पाठो गणः। गार्गिकः। आनुपदिकः। सन्दिश्ये द्विपदं जानन् द्वैपदिकः। ज्यौतिषिकः। गाणितिकः। अनुसूर्नाम ग्रन्थः। उगन्ताद्ध्रस्य कः॥

केऽणः (७. ४. १३)

कप्रत्यये परेऽणो ह्रस्वः स्यात्। आनुसुकः। लाक्षिकः लाक्षणिकः। मौहूर्तिकश्चोक्थादिरिति स्वामी। 'आख्यानाख्यायिकाभ्याम्।' एते कथाभेदौ। यवक्रीतेत्याख्यानम्। वासवदत्तेत्याख्यायिका। यावक्रीतिकः। वासवदत्तिकः। 'इतिहासपुराणाभ्याम्' ऐतिहासिकः। पौराणिकः। 'लक्षणकल्पान्तात्'। आश्वलक्षणिकः। मान्त्रकल्पिकः। 'विद्यान्तादनङ्गक्षत्रधर्मत्रिपूर्वात्' शाब्दविद्यां विदन् शाब्दविद्यिकः। 'अङ्गादिपूर्वात् स्वणेव'। आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रिभागा विद्या त्रिविद्या वेदत्रयं, तद्वित् त्रैविद्यः। द्विगुत्वे तु 'द्विगोर्लुगि'त्यणो लुकि त्रिविद्य इत्येव। 'पदोत्तरपदादिकन्'। प्रगृह्यपदिकः। शतपथ्यादेः 'पथः पिकन्'। शतपथं ब्राह्मणभेदः। शतपथिकः। षष्टिपथिकः। पित्वाच्छतपथिकी। शातपथ इत्यणपीति दण्डनाथः। 'सर्वसादेर्लुक्।' सर्ववेदानधीयन् सर्ववेदः। सशब्दादेस्तु, सवार्त्तिकमधीयन् सवार्त्तिकः॥

क्रमादिभ्यो वुन् (४. २. ६१)

क्रमपदशीक्षामीमांसासामभ्यः। क्रममधीते वेद वा, क्रमकः। पदकः। शीक्षकः। मीमांसकः। सामकः॥

अनुब्राह्मणादिनिः (४. २. ६२)

ब्राह्मणसदृशं ग्रन्थमधीते अनुब्राह्मणी॥

वसन्तादिभ्यष्ठक् (४. २. ६३)

वसन्तवर्षाशरद्धेमन्तशिशिरप्रथमचरमानुगुणकल्पाथर्वभ्यः। वसन्तेऽध्येयस्तद्वर्णनरूपो वा ग्रन्थो वसन्तः। तमधीते वासन्तिकः। वार्षिकः। प्रथमं भागं विदन् प्राथमिकः। चारमिकः। आनुगुणिकः। काल्पिकः। आथर्वणिकः। अस्य दाण्डिनायनवत्वा टिलोपाभावः॥

प्रोक्ताल्लुक् (४. २. ६४)

'तेन प्रोक्तम्' इत्यर्थे प्रत्यया वक्ष्यन्ते, तदन्तादध्येतृवेदित्रोर्जातस्य प्रत्ययस्य लुक् स्यात् । पाणिनिना प्रोक्तं पाणिनीयं, तदधीते वेद वा पाणिनीयः । स्त्रियां पाणिनीया । अण्लुक्ते ङीप् स्यादिति भेदः ॥

सूत्राच्च कोपधात् (४. २. ६५)

कोपधात् सूत्रवाचकादर्थद्वये प्रत्ययस्य लुक् स्यात् । संख्या-कनन्तादेवेदम् । अष्टकमिति पाणिनीयं, तदधीते इत्यष्टकः ॥

छन्दोब्राह्मणानि च तद्विषयाणि (४. २. ६६)

प्रोक्तप्रत्ययान्तानि यानि वेदब्राह्मणानि तान्यध्येतृवेदित्रर्थयुक्तान्येव प्रयुज्यन्ते न स्वतन्त्रम् । 'तेन प्रोक्तम्'(४-३-१०१) इत्यत्र तित्तिर्यादेश्छण् वक्ष्यते । तित्तिरिभिः प्रोक्तं वेदमधीयते तैत्तिरीया इत्येव प्रयोज्यम् । तित्तिरिभिः प्रोक्तं तैत्तिरीयमित्येवं न प्रयोज्यमित्यर्थः । प्रोक्ताधिकारे चेदं विस्तरिष्यते । छन्दोब्राह्मणेभ्योऽन्यत्र तु पाणिनिना प्रोक्तं पाणिनीयं सूत्रम् । शौनकीया शीक्षेत्येतावत्प्रयोगोऽप्यस्ति । यजूंषि तैत्तिरीयाणीति प्रयुक्तिस्तु तित्तिरीणां समूहस्तैत्तिरं, तत्सम्बन्धि तैत्तिरीयमिति छप्रत्ययेन साध्येति ॥

तदस्मिन्नस्तीति देशे तन्नाम्नि (४. २. ६७)

तदस्मिन्नस्तीत्यर्थे देशे वाच्ये नाम्न्यण् स्यात् । उदुम्बरवत्त्वात् औदुम्बरो नाम देशः ॥

तेन निर्वृत्तम् (४. २. ६८)

अत्रार्थे देशनाम्न्यण् । तेनेति हेतौ कर्तरि वा तृतीया । सहस्रेण निर्वृत्ता, साहस्री परिखा । कुशाम्बेन कृता, कौशाम्बी नगरी ॥

तस्य निवासः (४. २. ६९)

अत्रार्थेऽपि देशे नाम्न्यण् । ऋजुनावां निवासः, आर्जुनावः ।

अदूरभवश्च (४. २. ७०)

तस्य अदूरभव इत्यर्थेऽपि देशनाम्न्यण् । विदिशाया अदूरं नगरं, वैदिशम् । शेषात् प्रागेषु चतुर्ष्वर्थेषु तुल्यं प्रत्ययाः ॥

ओरञ् (४. २. ७१)

उवर्णान्ताच्चातुरर्थिकोऽञ् स्यात् । अणञोः स्वरे भेदः । कर्कटेलुशब्दात् कार्कटेलवम् ।

मतोश्च बह्वजङ्गात् (४. २. ७२)

बह्वच्प्रकृतिको यो मतुप् तदन्तादुक्तार्थेष्वञ् स्यात् । शार्यणावतम् । शर्यणावन्नाम सरः ॥

बह्वचः कूपेषु (४. २. ७३)

बह्वचः शब्दात् कूपनाम्न्यञ् । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ।

उदक् च विपाशः (४. २. ७४)

विपाश उदक्कूलजेषु कूपेषु वाच्येष्वबह्वचोऽप्यञ् । दत्तेन निर्वृत्तो, दात्तः कूपः ॥

सङ्कलादिभ्यश्च (४. २. ७५)

एभ्यश्चातुरर्थिकोऽञ् । सङ्कलेन निर्वृत्तः, साङ्कल इत्यादि ।

स्त्रीषु सौवीरसाल्वप्राक्षु (४. २. ७६)

सौवीरगेषु साल्वगेषु प्राग्देशगेषु च स्त्रीलिङ्गेषु देशेषु वाच्येष्वञ् । सौवीरे— दत्तमित्रकृता, दात्तमित्री नगरी । साल्वे— वैधूमाग्नी वरकृता । प्राक्षु— ककन्दकृता, काकन्दी पूः ॥

सुवास्त्वादिभ्योऽण् (४. २. ७७)

ओरञाद्यपवादः । सुवास्तोर्नद्या अदूरं, सौवास्तवं नगरमित्यादि ।

कोपधाच्च (४. २. ७९)

अण् स्यात् । कुकवाकुकं, कार्कवाककम् । कार्णच्छिद्रकः कूपः । औराणि कूपानि च ग्रामेऽण् ॥

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः (४. २. ८०)

अरीहणादिभ्यः सप्तदशभ्यो गणेभ्यः क्रमाद् वुञादयः सप्तदश स्युः । अरीहणादेर्वुञ् — आरीहणकम् । द्रौघणकम् । कृशाश्वादेश्छण् — कार्शाश्वीयम् । ऋश्यादेः कः — ऋश्यकम् । अवमकम् । कुमुदादेष्ठच् — कुमुदिकम् । काशादेरिलः —

काशिलो वनिलः कर्पूरिलः कर्दमिलस्तथा ।
पलाशिलः कण्टकिलस्तृणिलो देशवाचकाः ॥

तृणादेः सः — तृणसः । प्रेक्षादेरिनिः — प्रेक्षी । अश्मादे रः — अश्मरः । सख्यादेर्ढञ् — साखेयम् । संकाशादेर्ण्यः — सांकाश्यः । काम्पिल्यः । बलादेर्यः — बल्यम् । पक्षादेः फक् — पाक्षायणः । कर्णादेः फिञ् — कार्णायनिः । सुतङ्गमादेरिञ् — सौतङ्गमिः । 'इनः स्त्रियां ङीप्' प्राच्यः । सौतङ्गमीति नवार्वाचौ । प्रगदिन्नादेर्ञ्यः । 'नस्तद्धिते' (६-४-१४४) । प्रागद्यम् । वराहादेः कक् — वाराहकम् । कुमुदादेष्ठक् — कौमुदिकम् । देशनामत्वादसाक्षिकेर्गणोऽनुवृत्तिः ॥

जनपदे लुप् (४. २. ८१)

जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् । 'लुपि युक्तवदि'ति (१-२-५१) प्रकृतिवल्लिङ्गवचने । कुरूणां निवासो जनपदः, कुरवः । प्रकृतेर्बहुत्वाद् बहुवचनम् ॥

विशेषणानां चाजातेः (१. २. ५२)

विशेषणानां च प्रकृतिवल्लिङ्गवचने स्तः । रम्याः कुरवः । जातिवाचिनां तु जनपदनीवृत्तादीनां स्वलिङ्गवचने एव । कुरवो नीवृद् ।

एवं प्राक्तनमतेनोक्तमेव निराचष्टे पाणिनिः—

तदशिष्यं संज्ञाप्रमाणत्वात् (१. २. ५३)

लुपि प्रकृतिवल्लिङ्गवचने इत्येतन्न विधेयम् । दारा इत्यादिवत् कुरव इत्यादीनामपि संज्ञाप्रामाण्यादेव सिद्धेः ॥

लुब्योगाप्रख्यानात् (१. २. ५४)

'जनपदे लुबि'ति (४-२-८१) लुबप्यशिष्यः । कुरूणां निवास इत्यादियोगार्थस्याप्रख्यानात् । रूढिमात्रस्यैव प्रतीतेः इति ॥

योगप्रमाणे च तदभावेऽदर्शनं स्यात् (१. २. ५५)

शब्दे च कुर्वादियोगस्य वाचके सति तत्कुलोच्छेदे संज्ञाया अभावः स्यात् । दृश्यते च नन्देषूच्छिन्नेष्वपि जनपदस्य तत्संज्ञा इति । वैदिशो जनपदः औदुम्बर इत्यादौ लुब् नेष्टः ॥

वरणादिभ्यश्च (४. २. ८२)

एभ्यश्चातुरर्थिकस्य लुप् स्यात् । वरणानामदूरं नगरं वरणाः । शिरीषाः ग्रामः । अस्य शैरीषकः शिरीषक इति चेष्टम् । गोदौ नाम ह्रदौ । तयोरदूरभवौ गोदौ ग्रामः । प्रकृतेर्द्वित्वाल्लुपि द्वित्वम् ॥

एवं तक्षशिलोपान्तभूमिस्तक्षशिला किल ।
मथुरोज्जयिनी काञ्चीत्याद्याकृतिगणस्त्वयम् ॥

खलतिको विन्ध्यः, तस्यादूरभवानि खलतिकं वनानि । खलतिकादेर्लुपि वचनमेव प्रकृतिवदित्येकवचनं, लिङ्गं तु वनस्यैव ॥

शर्कराया वा (४. २. ८३)

अणो वा लुप् । शर्करात्रास्तीति शर्करा । अयं देशः शार्करः ॥

ठक्छौ च (४. २. ८४)

शार्करिकः । शार्करीयः । कुमुदादित्वाद् ठच्, वराहादित्वात् कक् चास्ति । ठचि शर्करिकः । ककि 'केऽणः' (७-४-१३) इति ह्रस्वः । शार्करकः ॥

नद्यां मतुप् (४. २. ८५)

नद्यां वाच्यायाम् उक्तार्थेष्वणाद्यपवादो मतुप् स्यात् ॥

मतौ बह्वचोऽनजिरादीनाम् (६.३.११७)

अजिरादिवर्जितस्य बह्वचः शब्दस्य मतौ परे नाम्नि दीर्घः स्यात् ॥

मादुपधायाश्च मतोर्वोऽयवादिभ्यः (८. २. ७)

मान्तान्मोपधादवर्णान्तादवर्णोपधाच्च यवादिवर्जिताच्छब्दात् परस्य मतोरादेर्वः स्यात् । उदुम्बरावती नाम नदी । वीरणावती । अजिरादेस्तु न दीर्घः । अजिरवती । पुलिनवती ॥

शरादीनां च (६. ३. १२०)

एषां मतौ नाम्नि दीर्घः स्यात् । शरावती नदी ।

एवं मुनीवती सिन्धुः कपीवत्यप्यहीवती ।
संज्ञायामिति सूत्रेण नाम्नि वत्वमिदं मतोः ॥

भागीरथी भैमरथी तन्निर्देशं नदीह्वयम् । ।
तत्र नद्यां मतुप् नेष्टो निर्देशेऽप्येव चेष्यते ॥

मध्वादिभ्यश्च (४. २. ८६)

एभ्यश्चातुरर्थिको मतुप् । मधुमान् देशः । बिसवान् ॥

कुमुदनडवेतसेभ्यो ड्मतुप् (४. २. ८७)

डित्वाट्टिलोपः । कुमुद्वत् ॥

झयः (८. २. १०)

झयः परस्य मतो वः स्यात् । कुमुद्वान् देशः । नड्वान् । वेत-

स्यात् । अत्राद्ुपधत्वाद् वः । 'महिषाच्चेति वाच्यम्' (वा० ४२-८-७) महिष्मान् नाम देशः ॥

नडशादाड्ड्वलच् (४. २. ८८)

टिलोपः । नड्वलः । शादः शष्पः । तद्वान् शाड्वलः । शाड्वला दूर्वेति नीलत्वोपचारात् ॥

शिखाया वलच् (४. २. ८९)

शिखावलं नाम नगरम् ॥

उत्करादिभ्यश्छः (४. २. ९०)

उत्करीयो देशः । पिप्पलीयः ॥

नडादीनां कुक् च (४. २. ९१)

एषां छः कुक् च । नडप्लक्षबिल्ववेणुवेत्रवेतसतृणकाष्ठेक्षुकपोतानाम् । नडकीयम् । प्लक्षकीयम् । बिल्वकीयम् । वेणुकीयमित्यादि । 'कुञ्चाया ह्रस्वश्च' (ग० सू०) कुञ्चकीयम् । 'तक्ष्णो नलोपश्च' (ग. सू०) तक्षकीयम् । एषु बिल्वकीयादीनां भवार्थेऽणि कृते

बिल्वकादिभ्यश्छस्य लुक् (६. ४. १५३)

एभ्यः परस्य छस्य भसंज्ञानिमित्ते तद्धिते परे लुक् स्यात् । बिल्वकीये भवो बैल्वकः । वैणुक इति ॥

शेषे (४. २. ९२)

इतः परं शिष्टेषु तत्रजातादितस्येदमन्तेष्वर्थेषु तुल्यं प्रत्यया उच्यन्ते । अस्यान्योऽप्यर्थः । उक्तादन्यत्रार्थेऽप्यण् स्यात् । चक्षुषा गृह्यते इति चाक्षुषं रूपम् । श्रावणः शब्दः । दृषदि पिष्टा, दार्षदाः सक्तवः । उलूखले क्षुण्णा, औलूखलाः । अश्वैरुह्यते, आश्वो रथः । चतुर्भिरुह्यते, चातुरः शकटः । चतुर्दश्यां दृश्यते, चातुर्दशं रक्षः । कुणपमत्ति, कौणपः । शृङ्गारे त्वणोऽन्येऽपि प्रत्यया उक्तादन्यत्रार्थे दर्शिताः । कलिं कुर्वन्त्यस्मा इति कालेयं गन्धद्रव्यम् । असिः पत-

१. 'लुक्' क. ग. घ. ङ, च. छ. पाठः.

स्यस्मादाग्नेयो ग्रावा । नद्यः स्यन्दन्तेऽस्मान्नादेयः शैलः । कुक्षिं रक्षन्त्यस्मात् कौक्षेयकः कृपाणः इति ॥

राष्ट्रावारपाराद् घखौ (४. २. ९३)

आभ्यां शेषे जाताद्यर्थे क्रमात् घखौ स्तः । राष्ट्रियः । अवारपारीणः । अवाक्तीरमवारम् । परतीरं पारम् । 'व्यस्तात् विपर्यस्ताच्च' अवारीणः । पारीणः । पारावारीणः ॥

ग्रामाद् यखञौ (४. २. ९४)

ग्राम्यः । ग्रामीणः । कत्र्यादित्वाद् ग्रामेयकोऽपि ॥

कत्र्यादिभ्यो ढकञ् (४. २. ९५)

ढस्य एय् । कत्त्र्युम्भिकुम्भिकुण्डिनपुष्करपुष्कलमोदनमाहिष्मतीवर्मतीनगरग्रामेभ्यः । कुत्सितास्त्रयः कत्रयः । तेषु जातादिः । कात्रेयकः । कत्रिरिति बहुव्रीहिरेवेति हरः । औम्भेयकः । कौम्भेयकः । कौण्डिनेयकः । पौष्करेयकः । पौष्कलेयकः । मौदनेयकः । माहिष्मतेयकः । वार्मतेयकः । नागरेयकः । संज्ञाशब्दान्नगरादेव ढकञ् । प्रसिद्धात्तु नागरः । 'कुल्याया यलोपश्च' (ग० सू०) कौलेयकं जलम् ॥

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु (४. २. ९६)

कुले गृहे भवत्वात्, कौलेयकः श्वा । कौक्षेयकः खड्गः । ग्रैवेयको ग्रीवालङ्कारः ॥

नद्यादिभ्यो ढक् (४. २. ९७)

नदीमहीश्रावस्तीवाराणसीकौशाम्बीवनकौशाम्बीसाल्वापूर्वनगरीपूर्वनगिरिभ्यः । नादेयः । माहेयः । श्रावस्तेयः । वाराणसेयः । कौशाम्बेयः । वानकौशाम्बेयः । साल्वेयः । पौर्वनगरेयः । पौरेयः । वानेयः । गैरेयः । 'वडवाया वृषे' (ग० सू०) वडवायाः पतिरनेन सम्बन्धी, वाडवेयो वृषः ॥

दक्षिणापश्चात्पुरसस्त्यक् (४. २. ९८)

दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

१. 'आवन्ती' इति. २. [illegible]

काषिश्याः ष्फक् (४. २. ९९)

कापिशीदेशजातं कापिशायनं मधु । षित्वात्, कापिशायनी द्राक्षा । 'बाह्ल्युर्दिपर्दिभ्यश्चेति वाच्यम्'(वा०) । बाह्लायनः । और्दायनः । पार्दायनः ॥

रङ्कोरमनुष्येऽण् च (४. २. १००)

जनपदार्थादस्मात् अमनुष्ये प्राणिनि वाच्येऽण् ष्फक् च स्यात् । राङ्कवो मेषः । राङ्कवायणी गौः । अप्राणिनि त्वण् । राङ्कवः कम्बलः । वार्तिकमते तु तत्रापि ष्फगस्ति । राङ्कवायणः कम्बलः ॥

द्युप्रागपागुदक्प्रतीचो यत् (४. २. १०१)

दिवादेर्यत् स्यात् । दिव्यम् । प्राच्यम् । अवाच्यम् ॥

उद ईत् (६. ४. १३९)

उदः परस्याच्शब्दस्य भत्वे आदेरीत् स्यात् । उदीच्यम् । प्रतीच्यम् ॥

कन्थायाष्ठक् (४. २. १०२)

कन्थाख्यग्रामे भवं कान्थिकम् ॥

वर्णौ वुक् (४. २. १०३)

वर्णुसंज्ञनदीसमीपगात् कन्थाग्रामाद् वुक् स्यात् । कान्थकम् ॥

अव्ययात् त्यप् (४. २. १०४)

'अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः ।'

अमात्यः । इहत्यः । क्वत्यः । तसिलन्तात्—कुतस्त्यः । ततस्त्यः । त्रान्तात्— तत्रत्यः । यत्रत्यः । अस्य परिगणनस्य प्रायिकत्वात् 'प्रातस्त्यस्तूर्यनाद' इत्याहुः । अन्याव्ययात् त्वण् । उपरिष्टाद् भव औपरिष्टः । पारस्तः । 'अव्ययानां भमात्रे टिलोपो वाच्यः (वा० ४-२-१०४) 'निर्ध्रुवे' (वा०४-२-१०४) त्यप् स्यात् । नित्यः । 'निसो निर्गते' (४-२-१०४) निस् त्य ॥

१. 'गौ' इति, २. ३. 'पा' इति च कोशगतो, ४. 'पिः परिगण्यते । ण' क. ख. ग. घ. पाठः.

**ह्रस्वात् तादौ तद्धिते (८. ३. १०१)**

तकारादौ तद्धिते परे ह्रस्वादिणः परस्य सस्य षः स्यात् । स्यप्त्वतल्तयतरतमतसिष्यते । निष्ट्यो वर्णाश्रमेभ्यो निर्गतश्चण्डालादिः । 'आविषश्छन्दसि' (वा० ४-२-१०४) इत्येतल्लोकेऽप्याह भोजः । प्राग्वत् षः । आविष्ट्यः प्रकाशो भवः । 'अरण्याण्णो वाच्यः' तेन ङीब् न । आरण्या लताः । 'दूरादेत्यः' । दूरेत्यः पथिकः । 'उत्तरादाहञ्' । औत्तराहः ॥

**ऐषमोह्यःश्वसोऽन्यतरस्याम् (४. २. १०५)**

एभ्यो वा त्यप् । अयं वत्सर ऐषमः । ऐषमस्त्यम् । ह्यस्त्यम् । श्वस्त्यम् । वेत्युक्तेर्वक्ष्यमाणौ ट्युट्युलौ तुट् च । ऐषमस्तनम् । ह्यस्तनम् । श्वस्तनम् ॥

**तीररूप्योत्तरपदादञ्ञौ (४. २. १०६)**

तीरोत्तरपदाद् रूप्योत्तरपदाच्च क्रमादेतौ स्तः । अञि पल्वलतीरे भवं पाल्वलतीरम् । ञे, शैवरूप्यम् । अञ्ञोर्ङीब्भेदः ॥

**दिक्पूर्वपदादसंज्ञायां ञः (४. २. १०७)**

पूर्वशालायां भवः पौर्वशालः । संज्ञारूपात् तु न[1] । प्राग्देशे पूर्वकृष्णमृत्तिकाख्यो ग्रामः । तस्मादणि कृते 'उत्तरपदस्ये'त्यधिकारे,

**प्राचां ग्रामनगराणाम् (७. ३. १४)**

दिक्शब्दात् परेषां प्राक्देशजग्रामनगराणां वृद्धिकृत्तद्धिते परे उत्तरपदादिवृद्धिः स्यात् । पूर्वकार्ष्णमृत्तिकः । नगरात् तु पूर्वकान्यकुब्जः ॥

**मद्रेभ्योऽञ् (४. २. १०८)**

दिक्पूर्वपदान्मद्रशब्दादञ्[2] स्यात् । आपरमद्रः ॥

**उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् (४. २. १०९)**

अञ् स्यात् । शैवपुरम् ॥

---

१. 'स्मिन् वत्सरे भवमैषमम्' घ. ङ. च. पाठः. २. 'ञ् । आ' क. ख. ग घ. च. पाठः.

प्रस्थोत्तरपदपलद्यादिकोपधादण् (४. २. ११०)

प्रस्थोत्तरपदात् पलद्यादेः कोपधाच्च पूर्वेणाञि प्राप्तेऽण् स्यात् । माद्रकीप्रस्थः । पालदः । कोपधात् नैलीनकः ॥

कण्वादिभ्यो गोत्रे (४. २. १११)

गर्गाद्यन्तर्गणात् गोत्रयञन्तात् कण्वादेरण् स्यात् । वृद्धाच्छापवादः । कण्वस्येदं काण्वम् । 'आपत्यस्य' (६-४-१५१) इति यलोपः । 'शाकल्याचेष्टम् ।' शाकलम् ॥

इञश्च (४. २. ११२)

इञन्तादपत्यवाचिनोऽण् । दाक्षेरिदं दाक्षम् । 'गोत्रप्रत्ययान्तात् समासेऽप्यसमस्तवत् प्रत्ययो वाच्यः ।' आर्यदाक्षेरिदम् आर्यदाक्षमिति दाक्षिवदेवाण् । 'आसुरेश्छो वाच्यः ।' असुरस्यापत्यमासुरिः । तस्येदमासुरीयम् ॥

न द्व्यचः प्राच्यभरतेषु (४. २. ११३)

प्राग्देशजानां भरतानां च गोत्रवचनात् द्व्यच इञन्तादण् न । पैङ्गेरिदं पैङ्गीयमिति वृद्धाच्छ एव । एवं भरतेष्वूह्यम् ॥

वृद्धाच्छः (४. २. ११४)

वृद्धेभ्यः शेषेऽर्थे छः स्यात् । मालीयः । 'शैषिकात् सरूपः शैषिको नेष्टः ।' तेन मालीये भव इत्यत्र पुनश्छो न । विरूपास्तु स्यात् । राष्ट्रीयीयः । संज्ञापूर्वत्वाद् वृद्धाच्छोऽनित्यः । द्वारपालस्येदं दौवारपालं धनम् । श्वादंष्ट्रायां भवः शौवदंष्ट्रः । द्वारादि । 'गोत्रप्रत्ययान्तादसमस्तवदि'ति काश्यपीयवत् परमकाश्यपीय इत्यपि छः । 'जिह्वाकात्यहरीतकात्यवर्जमित्युक्ते'स्तयोरणेव । जैह्वाकातः । हारीतकातः । आपत्ययलोपः । 'त्यदादीनि चे'ति वृद्धत्वात् त्यदीयम् । तदीयम् । द्वीयम् । किमीयम् ॥

एङ् प्राचां देशे (१. १. ७५)

---

१. २. 'हरित' इति काशिकादौ.

एङ् यस्याचामादिः स प्राग्देशवाचकः शब्दो वृद्धसंज्ञः। भोजकटीयः। 'वा नामधेयस्य वृद्धसंज्ञा' (वा० १-१-७३) इति नलीयः। नालः॥

### भवतष्ठक्छसौ (४. २. ११५)

त्यदादिगतस्य भवच्छब्दस्यैतौ स्तः। तान्तत्वाट्ठस्य कः। भावत्कः। 'सिति च' (१-४-१६) इति पदत्वाज्जश्। भवदीयम्। 'अत्र स्त्रियां पुंवत्त्वं वाच्यम्।' भवत्या इदं भावत्कम्। भवदीयम्॥

### काश्यादिभ्यष्ठञ्ञिठौ (४. २. ११६)

एभ्यः ठञ् ञिठ इति स्तः। ञिठस्येकार उच्चरणार्थः। द्वयोर्ञित्त्वं वृद्ध्यर्थम्। ञिठस्य ङीप्नेति भेदः। काशिकः। चैदिकः। स्त्रियां काशिकी। काशिका। 'आपदादिपूर्वात् कालाट्ठञ्ञिठाविष्टौ' (ग०)आपत्कालिकी। आपत्कालिका। एवमौर्ध्वकालिकतात्कालिकौ॥

### वाहीकग्रामेभ्यश्च (४. २. ११७)

वृद्धेभ्यो म्लेच्छग्रामेभ्यष्ठञ्ञिठौ स्तः। मान्थविकी। मान्थविका॥

### विभाषोशीनरेषु (४. २. ११८)

उशीनरगताद् वृद्धम्लेच्छग्रामाद् वा ठञ्ञिठौ। आह्वजालिकः स्त्रियां प्राग्वत्। वेति वृद्धाच्छः। आह्वजालीयः॥

### ओर्देशे ठञ् (४. २. ११९)

उवर्णान्ताद् देशात् ठञ्। उगन्तात् कः। 'केऽणः'। शम्बरजम्ब्वां भवं शाम्बरजम्बुकम्॥

### वृद्धात् प्राचाम् (४. २. १२०)

प्राग्देशे तूवर्णान्ताद् वृद्धादेव ठञ्। नापितवास्तुकः। अवृद्धात् त्वणेव। मल्लवास्तोर्माल्लवास्तवः॥

### धन्वयोपधाद् वुञ् (४. २. १२१)

१ 'शम्बर' इति काशिकादौ।

मरोर्योपधाच्च वृद्धाद् देशाद् वुञ् । पारेधन्वाख्यमरुदेशे जातः पारेधन्वकः । योपधात् साङ्काश्यकः ॥

प्रस्थपुरवहान्ताच्च (४. २. १२२)

एतत्त्रयान्ताद् वृद्धदेशाद् वुञ् । मालाप्रस्थकः । नान्दीपुरकः । फाल्गुनीवहकः ॥

रोपधेतोः प्राचाम् (४. २. १२३)

रोपधादीदन्ताच्च वृद्धात् प्राग्देशात् वुञ् । पाटलिपुत्रकः । ऐकचक्रकः । 'एङ् प्राचामि'ति वृद्धता । काकन्दीभवः काकन्दकः ॥

जनपदतदवध्योश्च (४. २. १२४)

वृद्धाज्जनपदात् जनपदावधेश्च वुञ् । आहिसारकः । त्रैगर्तो जनपदावधिभूतोऽवान्तरजनपदः । तत्र जातस्त्रैगर्तकः । 'जनपदावधेरपि ग्रामादेर्नेष्टम्' ॥

अवृद्धादपि बहुवचनविषयात् (४. २. १२५)

अवृद्धादपि बहुवचननियताज्जनपदात् तदवधेश्च वुञ् । पञ्चालेषु भवः पाञ्चालकः । तदवधेः आजमीढकः । 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्ये' (वा०७.३.१२)ति तदन्तविधेरेतत्पूर्वादपि जनपदाद् वुञ् । सुपञ्चालेषु भव इत्यत्र ॥

सुसर्वार्धाज्जनपदस्य (७. ३. १२)

एभ्यः परस्य जनपदस्य वृद्धिकृत्तद्धिते परे उत्तरपदवृद्धिः स्यात् । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः ॥

दिशोऽमद्राणाम् (७. ३. १३)

दिक्शब्दात् परेषाममद्राणां जनपदानामुत्तरपदवृद्धिः स्यात् । पूर्वपाञ्चालकः । अपरपाञ्चालकः । मद्रात् तु मद्रेभ्योऽञि पौर्वमद्रः ॥

कच्छाग्निवक्त्रवर्तोत्तरपदात् (४. २. १२६)

---

१. 'कः । का' क. ख. ग. पाठः. २. गर्तो इति काशिकादौ ।

कच्छाद्युत्तरपदाद् देशाद् वुञ् । दारुकच्छकः । काण्डाग्नकः । ऐन्दुवक्त्रकः । बाहुवर्त्तकः ॥

धूमादिभ्यश्च (४. २. १२७)

एभ्यो देशेभ्यो वुञ् । धौमकः । आन्तरीपकः । घोषकः । औज्जयिनकः । दाक्षिणापथकः । साकेतकः । पाथेयस्येदं पाथेयकम् । शरीरावयवः कुक्षिशब्दो धूमादिरिति हरः । कुक्षौ जातं कौक्षकम् । 'विदेहानर्त्तदेशार्थादपि वुञ्' । (स. सू०) विदेहानां राज्ञां इदं वैदेहकम् । आनर्तकम् । 'समुद्रान्नावि मनुष्ये च' (स. सू०) सामुद्रकस्तज्जातमनुष्यः । सामुद्रिका समुद्रनौः ॥

नगरात् कुत्सनप्रावीण्ययोः (४. २. १२८)

नगरजुषां छलाद्यैः कुत्सितत्वं बहुपरिचयात् प्रावीण्यं चास्ति । तयोर्द्योत्ययोर्नगराद् वुञ् । नागरकेण मुषितं स्यात् । नागरकेण सा वशीकृता स्यात् ॥

अरण्यान्मनुष्ये (४. २. १२९)

वुञ् स्यात् । आरण्यको नरः । 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्'(वा०) आरण्यकः पन्थाः । वनेऽध्येतव्य आरण्यकोऽध्याय इत्यादि । 'वा गोमयेषु (वा०)' आरण्यका आरण्या वा गोमयाः । एभ्योऽन्यत्र त्वारण्याः पशवः ॥

विभाषा कुरुयुगन्धराभ्याम् (४. २. १३०)

आभ्यां वा वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः ॥

मद्रवृज्योः कन् (४.२.१३१)

मद्रेषु जातादिर्मद्रकः वृजिकः ॥

कोपधादण् (४. २. १३२)

कोपधाद् देशादणेव । ऋषकेषु जात आर्षकः । ऐक्ष्वाकः । 'अवृद्धादपी' (४. २. १२९)ति वुञि ओर्देशे ठञि प्राप्तेऽण् ॥

1. 'आर्षिक इति काशिकादौ.

## कच्छादिभ्यश्च (४. २. १३३)

एभ्यो देशेभ्योऽणेव । कच्छकुरुसिन्धुसिन्ध्वन्तगन्धारकुलूतमधुमद्वर्णुरङ्कुद्वीपानूपसाल्वादिभ्योऽण् । काच्छः । कौरवः । सैन्धवः सिन्ध्वन्तस्य 'हृद्भगे'त्युभयपदवृद्धिः । साक्तुसैन्धवः । गान्धारः । कौलूतः । माधुमतः । वार्णवः । राङ्कवः । द्वैपः । आनूपः । साल्वः । द्वीपस्य धूमादित्वात् द्वैपकोऽपि ॥

## मनुष्यतत्स्थयोर्वुञ् (४. २. १३४)

कच्छादेर्मनुष्ये तत्स्थे च वाच्ये वुञ् । काच्छको मनुष्यः । काच्छकं हसितम् । कौरवको नरः । कौरविका चूडेत्यादि ॥

## अपदातौ साल्वात् (४. २. १३५)

साल्वान्मनुष्यतत्स्थयोर्वाच्ययोर्वुञ्[2] । पदातौ वाच्ये न । साल्वको नरः । साल्वकं जल्पितम् । पदातिस्तु कच्छाद्यणि साल्वः ॥

## गोयवाग्वोश्च (४. २. १३६)

साल्वाद् वुञ् । साल्वजातः साल्वको गौः । साल्विका यवागूः ॥

## गर्तोत्तरपदाच्छः (४. २. १३७)

देशादित्येव । वृकगर्तीयम् ॥

## गहादिभ्यश्च (४. २. १३८)

एभ्यश्छः स्यात्[1] । गहान्तस्थसमविषमोत्तमोत्तरान्तरान्याङ्गवङ्गमगधेभ्यः । गहीयम् । अन्तस्थीयम् । समीयम् । विषमीयम् । उत्तमीयम् । उत्तरीयम् । अन्तरीयम् । अन्यदीयम् । अस्य दुग् वक्ष्यते । अङ्गीयम् । वङ्गीयम् । मगधीयम् । वाल्मीकिसौमित्र्यादे 'रिञश्चे' (४. २. ११२) त्यणुबाधाय पाठः । वाल्मीकीयम् । सौमित्रीयम् । 'इषोरग्रानीकाभ्याम्' (स. सू०) इष्वग्रीयम् । इष्वनीकीयम् । 'एकाद् वृक्षपलाशिकाभ्याम्' (स. सू०) एकवृक्षीयम् । एकपलाशिकीयम् । 'समानाच्च ग्रामात्' (स. सू०) समानग्रामीयम् । एकग्रामीयम् । 'अधमो-

---

१. 'म , पाठः. २. 'योर्व' ख. ङ. च. पाठः.

समाभ्यां च शाखात्' (ग. सू०) चकारादेकसमानाभ्यां च। बहुव्रीहित्वाद्ध्रस्वत्वम् । अधमशाखीयम् । उत्तमशाखीयम् । एकशाखेषु भवमेकशाखीयम् । एवं समानशाखीयम् । 'पूर्वापराभ्यां पक्षात्' (ग. सू०) पूर्वपक्षीयम् । अपरपक्षीयम् । अस्याकृतिगणत्वात् सुरपक्षीयमित्याद्यपि । 'पृथिवीमध्यस्य मध्यमश्च' (ग. सू०) पृथिवीमध्यमवं मध्यमीयम् । 'एकमुखपार्श्वेभ्यस्तसः' (ग. सू०) अव्ययानां भमात्रे टिलोपः । एकतो भवं एकतीयम् । मुखतीयम् । पार्श्वतीयम् । 'स्वपरजनदेवानां कुक् च' (ग. सू०) स्वकीयम् । परकीयम् । जनकीयम् । देवकीयम् । आगमानित्यत्वात् स्वीयमपि । गहादेराकृतिगणत्वान्मतुबर्थे भवं मतुबर्थीयं मत्वर्थीयं चेति हरः । वेणुकादिभ्यश्छण् वाच्यः । (ग. सू०) वैणुकीयम् । औत्तरपदकीयम् ॥

प्राचां कटादेः (४. २. १३९)

कटादेः प्राग्देशशब्दाच्छः । कटसालीयम् ।

राज्ञः क च (४. २. १४०)

राज्ञश्छो नस्य कत्वं च । राजकीयम् ॥

वृद्धादकेकान्तखोपधात् (४.२.१४१)

अकान्तादिकान्तात् खोपधाच्च वृद्धात् प्राग्देशाच्छः । जनपदवुञाद्यपवादः । ब्राह्मणको नाम देशः । ब्राह्मणकीयम् । आश्वत्थिकीयम् । कौटिशिखीयम् । 'एङ् प्राचाम्—' (१-१-७५) इति वृद्धता । 'अकेकान्तादित्यत्र कोपधादिति वाच्यम्' (वा०४-२-१४१) सौसुकीयम् ॥

कन्थापलदनगरग्रामह्रदोत्तरपदात् (४. २. १४२)

कन्थाद्युत्तरपदाद् वृद्धाद् देशाच्छः । दाक्षिकन्थीयम् । माहकिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् । वृद्धत्वेऽपि छोक्तिरेषां वाहीकग्रामत्वाड्ञिठ्याद्यार्था ॥

पर्वताच्च (४. २. १४३)

पर्वतभवः पर्वतीयो राजा ॥

---

१. 'अकेकोप' ग. पाठः. २, १. 'पल' इति मुद्रितकाशिकादिपाठः.

विभाषामनुष्ये ४. २. १४४)

पर्वतादमनुष्ये वाच्ये वा छः । पर्वतीयं पार्वतं वा फलम् । मनुष्ये तु पूर्वेण छ एव ॥

कृकणपर्णात् भारद्वाजे (४. २. १४५)

भारद्वाजदेशाभ्यामाभ्यां छः । कृकणीयम् । पर्णीयम् । अन्यदेशे कार्कणम् । पार्णम् ॥

युष्मदस्मदोरन्यतरस्यां खञ्च (४. ३. १)

अनयोः शेषे खञ् छश्च वा स्यात् । विकल्पादण् च ॥

तस्मिन्नणि च युष्माकास्माकौ (४. ३. २)

खञ्यणि च परे युष्मदस्मदोरेतावादेशौ स्तः । यस्येति लोपः । खञि, यौष्माकीणम् । आस्माकीनम् । अणि, यौष्माकम् । आस्माकम् । छे आदेशाभावाद् युष्मदीयम् । अस्मदीयम् ॥

तवकममकावेकवचने (४. ३. ३)

खञ्यणि च परे एकार्थयोर्युष्मदस्मदोरेतौ स्तः । तावकीनम् । मामकीनम् । तावकम् । मामकम् । छे तु—

प्रत्ययोत्तरपदयोश्च ७.२.९८)

प्रत्यये उत्तरपदे च परे एकार्थयोर्युष्मदस्मदोर्मकारपर्यन्तस्य[2] भागस्य त्व म इत्यादेशौ स्तः । त्व अद् ईय्, म अद् ईय्, अतो गुणे । त्वदीयम् । मदीयम् । उत्तरपदे परे तु त्वादेशः । त्वत्प्रियो मत्प्रिय इत्यादि ॥

अर्धाद् यत (४. ३. ४)

अर्धे भवमर्ध्यम् । 'सपूर्वपदाट्ठञ् वाच्यः' (वा० ४-३-२) राज्यार्धिकम् ॥

---

१. 'म् । इति चतुर्थे द्वितीयः । यु' ग., 'मू। चतुर्थे द्वितीयः । यु' क. ख. ङ, च. पाठः. २. 'मंप' ग. पाठः.

परावराधमोत्तमपूर्वाच्च (४. ३. ५)

परादिपूर्वादर्धाद् यत् । परार्ध्यम्, उत्तमार्ध्यं चोत्कृष्टभागभवम् । अवरार्ध्यम्, अधमार्ध्यम् निकृष्टभागभवम् । परार्धसङ्ख्यामूल्यसम्बन्धि वा परार्ध्यं रत्नम् । 'अवरार्धात् स्वार्थेऽपि यदिष्टः' अवरार्धमेवावरार्ध्यम् ॥

दिक्पूर्वपदाट्ठञ्च (४. ३. ६)

दिक्पूर्वपदादर्धाट्ठञ् यच्च । पौर्वार्धिकम् । पूर्वार्ध्यम् ॥

ग्रामजनपदैकदेशादञ्ठञौ (४. ३. ७)

ग्रामजनपदयोरंशवाचकाद् दिक्पूर्वपदार्धशब्दादञ्ठञौ स्तः । अस्य ग्रामस्य पौर्वार्धा विप्राः, पौर्वार्धिकाः । एवं जनपदेऽपि ॥

मध्यान्मः (४. ३. ८)

मध्ये भवो मध्यमः । 'आदेश्च वाच्यम्' आदिमः । 'अवोधसो-रन्त्यलोपश्च' अवमः । अधमः ॥

अ साम्प्रतिके (४. ३. ९)

उत्कृष्टनीचयोर्मध्ये भवः साम्प्रतिको मतः ।
तस्मिन् वाच्ये मध्यशब्दाद् स्यान्मध्या वधूरियम् ॥

द्वीपादनुसमुद्रं यञ् (४. ३. १०)

समुद्रसमीपे समुद्रान्तर्वा यो द्वीपस्तस्माद् यञ् स्यात् । द्वैप्यो वाशः शको वा । अन्यत्र द्वैपो नद्यां वतसः ॥

कालाट्ठञ् (४. ३. ११)

कालवाचिभ्यः शेषे ठञ् स्यात् । मासिकम् । सांवत्सरिकम् 'लक्षणया कालवृत्तिभ्योऽपीष्टम्' । कदम्बपुष्पमिति लक्षणया शरद् तत्र भवं, कादम्बपुष्पिकम् । एवं शरद्भवं, व्रीहिपलालिकम् ॥

1. 'प्रभ' क. घ. ट. न. पाठः.

कार्त्तिकेयो विवस्वानित्यस्ति कार्त्तिकमासजे ।
तत्र कालाट्ठञि प्राप्ते द्वौ स्मृय इति वामनः ॥
शार्वरं तम इत्याद्यप्यसाध्वेवेति सोऽब्रवीत् ।
वस्तुतश्चेत् कार्त्तिकिको भानुः शार्वरिकं तमः ॥
एवं पार्विक इत्येव पार्वणश्चन्द्र इत्यसत् ।
स्याद् वा चातुर्दशं रक्ष इतिवच्छेष इत्यणि ॥

श्राद्धे शरदः (४. ३. १२)

अस्माच्छ्राद्धे वाच्ये ठञ् । शारदिकं श्राद्धम् । शारदोऽन्यः ॥

विभाषा रोगातपयोः (४. ३. १३)

शारदिकः शारदो वा रोग आतपश्च ॥

निशाप्रदोषाभ्यां च (४. ३. १४)

वा ठञ् । नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ॥

श्वसस्तुट् च (४. ३. १५)

श्वश्शब्दाद् वा ठञ् । ठस्येके कृते तुडागमश्च । श्वस् तिक, द्वारादित्वादैच् । शौवस्तिकम् । वेत्युक्तेः श्वस्तनम् ॥

सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् (४. ३. १६)

एभ्यः कालाट्ठञि प्राप्तेऽण् सन्धिवेलासन्ध्यात्रयोदशी-चतुर्दशीपञ्चदशीपौर्णमास्यमावास्याप्रतिपद्भ्यः । सन्धिवेलायां भवं सान्धिवेलम् । सान्ध्यम् । तुल्यार्थौ । प्रातिपदः । प्रतिपदशब्दात् तु कालाट्ठञि प्रातिपदिकश्चन्द्रः । 'संवत्सरात् फलपर्वणोः' (ग. सू.) सांवत्सरं फलं पर्व वा । ऋतुभ्यस्तु ग्रैष्मम् । शैशिरम् । ग्रीष्मस्य पूर्वो भागः पूर्वग्रीष्मः । तत्राण् ॥

अवयवादृतोः (७. ३. ११)

---

१. - 'त' ग. पाठः,

अवयवात् परस्यर्तोर्वृद्धिप्राप्तावुत्तरपदवृद्धिः स्यात् । पूर्वग्रैष्मः । अपरग्रैष्मः । नक्षत्रात् तैषम् । 'तिष्यपुष्ययोर्नक्षत्राणि' (वा० ६. ४. १४९) इति यलोपः ॥

प्रावृष एण्यः (४. ३. १७)

प्रावृषेण्यम् ॥

वर्षाभ्यष्ठक् (४. ३. १८)

वार्षिकम् ॥

सर्वत्राण् च तलोपश्च (४. ३. २२)

हेमन्तशब्दाल्लोकवेदयोष्ठञ् अण् च स्यात् । अणि तलोपः । तलोपं विना च स्यात् । हैमन्तिकम् । हैमनम् । हैमन्तम् ॥

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (४. ३. २३.)

सायमादिभ्यः कालवाच्यव्ययाच्च ट्युट्युलौ स्तः । तयोस्तुडागमश्च । द्वयोः स्वरे भेदः । टो ङीबर्थः । योरने कृते तुट्, सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । निपातनान्मान्तत्वमेत्वं च । अव्ययाद्—दोषातनम् । श्वस्तनम् । प्रातस्तनम्[1] । कालार्थस्य प्रादेरनव्ययत्वे कालाट्ठञेव । प्राचिकम् । पुराशब्दस्य पुरातनम् । 'पुराणप्रोक्तेषु' (४-३-१०५) इत्युक्तेस्तुडभावोऽपि । 'चिरपरुत्परारिभ्यस्त्नो वाच्यः (वा०४-३-२३) चिरत्नम् । अतीताब्दभवं परुत्नम् । तत्पूर्वाब्दभवं परारित्नम् । 'प्रगस्य मलोपश्च' । (वा० ४-३-२३) प्रातर्भवं प्रत्नम् । 'अग्रपश्चाड्डिमच्' (वा०. ४-३-२३) अग्रिमम् । पश्चिमम् । अन्ताच्च (वा० ४-३-२३) अन्तिमम् ॥

विभाषा पूर्वाह्णापराह्णाभ्याम् (४. ३. २४)

आभ्यां वा ट्युट्युलौ तुट् च । पूर्वाह्णतनम् । अपराह्णतनम् ॥

घकालतनेषु कालनाम्नः (६. ३. १७)

---

१. 'ट्च । ट्' क. ख. घ. ङ. च. पाठः. २. 'घ्नु । प्र' घ. पाठः

घसंज्ञकयोस्तरप्तमपोः कालशब्दे तने च परे कालनाम्नः (उत्तरस्याः) सप्तम्या अलुग् वा स्यात्। तेन पूर्वाह्णेतनमपराह्णेतनमित्यपि। वैरुक्तेः कालाट्ठञ्। पौर्वाह्णिकम्। आपराह्णिकम्। एते शैषिका जातादिषु यथार्हं योज्याः॥

तत्र जातः (४. ३. २५)

अस्मिन्नर्थे प्राग्दीव्यतीया अणादयः शैषिका घादयश्च स्युः। मथुरायां जातो माथुरः। 'उत्सादिभ्योऽञ्'। औत्सः। स्रौणः। शैषिके राष्ट्रिय इत्यादि। प्रोष्ठपदासु जात इत्यत्र नक्षत्रेभ्योऽण्॥

जे प्रोष्ठपदानाम् (७. ३. १८)

प्रोष्ठपदपर्यायाणां जातार्थे वृद्धिकर्तद्धिते परे उत्तरपदवृद्धिः स्यात्। प्रोष्ठपादः। भद्रपादः॥

प्रावृषष्ठप् (४. ३. २६)

प्रावृषि जातः, प्रावृषिकः॥

संज्ञायां शरदो वुञ् (४. ३. २७)

शरदि जाताः, शारदका नाम दर्भाः मुद्गाश्च। अनाम्नि, शारदो नीरदः॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करात् वुन् (४. ३. २८)

एभ्यो जाते वुन्। पूर्वाह्णकः। अपराह्णकः। आर्द्रकः। मूलकः। प्रदोषकः। अवस्करकः। अत्र संज्ञाधिकारादनाम्नि पूर्वाह्णेतनमित्यादि स्यादित्येके॥

पथः पन्थ च (४. ३. २९)

वुन् पन्थादेशश्च। पथि जातः, पन्थकः॥

अमावास्याया वा (४. ३. ३०)

---

१. 'ये स' ग. घ. पाठः. — २. 'त' ग. पाठः.

अस्या वा वुन् । अमावास्यकः । सन्धिवेलादित्वादणि, आमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्याया अपि । अमावस्यकः । आमावस्यः ॥

अ च (४. ३. ३१)

द्वयोरप्रत्ययश्च अमावास्यः । अमावस्यः ॥

*सिन्ध्ववकराभ्यां कन् (४. ३. ३२)

सिन्धौ जातः, सिन्धुकः । अवकरकः ॥

अणञौ च (४. ३. ३३)

द्वाभ्यां क्रमात् स्तः । सैन्धवः । आवकरः ॥

श्रविष्ठाफल्गुन्यनूराधास्वातीतिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् (४. ३. ३४)

एभ्यो जाते प्रत्ययस्य लुक् स्यात् ॥

लुक् तद्धितलुकि (१. २. ४९)

तद्धितस्य लुकि सत्यप्रधानस्य स्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः, श्रविष्ठः । अत्र जातस्यैव प्राधान्याच्छ्रविष्ठाया अप्राधान्यम् । (फल्गुनः ।) अनूराधः । स्वातिरित्यादि । बहुलाः कृत्तिकाः । तज्जो बहुलः । स्वातीति ङीपन्तस्य ग्रहादङीपन्तादणो लुङ्नेति माधवः । 'न य्वाभ्याम्' (७.३.३) इत्यैच् । स्वातौ जातः, सौवातः । 'चित्रारेवतीरोहिणीभ्यः स्त्रियां लुग् वाच्यः ।' ततः स्त्रीप्रत्ययस्य[2] लुकि पुनष्टाप् गौरादिङीप् च । चित्रायां जाता, चित्रा । रेवती । रोहिणी । पुन्जातयोः स्त्रीप्रत्यययोः[3] प्राधान्यान्न लुक् । अस्त्रियां लुग् वेति भोजः । चित्रः । चैत्रः । रेवतः । रैवतः । रोहिणः । रौहिणः । 'फल्गुन्यषाढाभ्यां स्त्रियां टानौ वाच्यौ ।' यस्येति लोपे फल्गुनः । टित्त्वात् ङीप् । फल्गुनी । अषाढा । 'श्रविष्ठाषाढाभ्यां छण्

१. 'श्र' ग. पाठः. २. 'यह्य' क. प. पाठः. ३. 'योर्न ङ' ग. पाठः.

*. सरस्वतीकण्ठाभरणपाठोऽयमत्र । मुद्रितायामष्टाध्याय्यां पाठस्तु "सिन्ध्वपकराभ्यां कन्" इति ।

वाच्यः ।' आविष्ठीयः । आषाढीयः । आविष्ठः, आषाढः, फाल्गुन इत्यणपि भोजोक्तः ॥

स्थानान्तगोशालखरशालाच्च (४. ३. ३५)

एभ्यो जातेऽणो लुक् । अश्वस्थानः । गोष्ठजातो, गोशालः । खरशालः ॥

वत्सशालाभिजिदश्वयुक्शतभिषजो वा (४. ३. ३६)

एभ्योऽणो वा लुक् । वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषजः । 'अत्राणो वा डित्त्वं वाच्यम् ।' शातभिषः ॥

नक्षत्रेभ्यो बहुलम् (४. ३. ३७)

नक्षत्रेभ्यः परस्य जातप्रत्ययस्य बहुलं लुक् स्यात् ।

मार्गशीर्षज्यैष्ठचैत्रमाघरैवतरौहिणाः ॥
अलुकोऽथापभरणश्रावणौ वा परेषु लुक् ॥

इति श्रौतमतं त्वचौ तूक्तो मृगशिरा अपि ।
आर्द्रायुक्तो पुनादिर्यः स तथैव हि सर्वदा ॥

कृतलब्धक्रीतकुशलाः (४. ३. ३८)

तत्र कृत इत्याद्यर्थेऽणादिः स्यात् । मथुरायां कृतं क्रीतं लब्धं वा, माथुरम् । खड्गे कुशलः, खाड्गः । स्राघ्नः । सौघ्नः । गौघः । एवं राष्ट्रे कृतं राष्ट्रियमित्यादि ॥

प्रायभवः (४. ३. ३९)

तत्र प्रायभवं इत्यर्थेऽणादिः स्यात् । मथुरायां प्रायेण भवतीति माथुरः कृष्णः । अनित्यभवः प्रायभवः, नित्यभवस्तत्रभव इति भेदः ॥

उपजानूपकर्णोपनीवेष्ठक् (४. ३. ४०)

---

१. 'मा' क. ख. ग. ञ. ङ. पाठः. २. 'नेड्यै' ख. ग. घ. पाठः.

औपजानुकौ बाहू । औपकर्णिकमीक्षितम् । औपनीविकी काञ्ची ॥

सम्भूते (४. ३. ४१)

तत्र सम्भूतमित्यर्थे यथार्हं स्युरणादयः ।
उपपन्ने हि सम्भूतं प्रमाणानतिरेकि च ॥

श्रुतावुपपन्नं, श्रौतम् । पञ्जरानतिरिक्तप्रमाणं, पाञ्जरं पात्रम् ।

कोशाड्ढञ् (४. ३. ४२)

कृमिकोशोद्भवं वासः, कौशेयम् ।

कारणे कार्यसद्भावपक्षात् सम्भूततोच्यते ।
विकारे वाच्ये एण्या ढञ् कोशाच्चेत्याह भाष्यकृत् ॥

कालात् साधुपुष्प्यत्पच्यमानेषु (४. ३. ४३)

कालवाचिभ्यस्तत्र साधुरित्याद्यर्थेऽणादिः स्यात् । हेमन्ते साधुर्हैमनः प्रावारः । वसन्ते पुष्प्यन्तीति, वासन्त्यः कुन्दलताः । शरदि पच्यमानाः, शारदाः शालयः ॥

उप्ते च (४. ३. ४४)

कालात् तत्रोप्तमित्यर्थेऽणादिः । हेमन्ते उप्ता हैमना यवाः ॥

आश्वयुज्या वुञ् (४. ३. ४५)

आश्वयुज्यां पौर्णमास्यामुप्ता, आश्वयुजका मुद्गाः ॥

ग्रीष्मवसन्तादन्यतरस्याम् (४. ३. ४६)

आभ्यामुप्ते वा वुञ् । ग्रैष्मकाः ग्रैष्मा वा शालयः । वासन्तका वासन्ता वा ॥

देयमृणे (४. ३. ४७)

कालात् तत्र देयमित्यर्थे ऋणे वाच्येऽणादिः । मासिकमृणम् ।

कलाप्यश्वत्थयवबुसाद् वुन् (४. ३. ४८)

---

१. 'मिति कथ्यते । का' च. पाठः. २. 'कार्ये' [illegible] पाठः

यदा मयूराः पिच्छवन्तः स्युः स कालो लक्षणया कलापी। तत्र देयमृणं, कलापकम्। एवमश्वत्थफलवति काले देयमृणम्, अश्वत्थकम्। यवबुसोत्पत्तिकाले देयमृणं यवबुसकम् ॥

ग्रीष्मावरसमाद् वुञ् (४ ३. ४९)

ग्रीष्मे देयमृणं, ग्रैष्मकम्। अतीतसमायां देयमव्याप्यदत्तम्, आवरसमकम्। आगामिनां वत्सराणाम् आद्ये वत्सरे देयमिति हृदः ॥

संवत्सराग्रहायणीभ्यां ठञ्च (४ ३. ५०)

वुञ् च स्यात्। सांवत्सरिकम्। सांवत्सरकम्। आग्रहायणिकम्। आग्रहायणकमृणम् ॥

व्याहरति मृगः (४. ३. ५१)

कालात् तत्र रौतीत्यर्थे मृगे वाच्येऽणादिः। प्रदोषे रौतीति, प्रादोषिकः क्रोष्टा। एवं नैशिकः ॥

तदस्य सोढम् (४. ३. ५२)

कालात् तदस्य सोढमित्यर्थेऽणादिः। निशा सोढा अस्येति नैशिको वटुः। निशायामध्ययनमत्र निशा, तदस्य परिचयात् सोढव्यं जातमित्यर्थः ॥

तत्र भवः (४. ३. ५३)

अस्मिन्नर्थेऽणादयः स्युः। माथुरः। राष्ट्रियः। शालीयः। सरय्वा अणि 'मारवेक्ष्वाके'ति निपातनात्, सारवं जलम् ॥

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्(७. ३. १)

एषामाद्यचो वृद्धिप्राप्तावात् स्यात्। देविकायां भवं दाविकं जलम्। शांशपम्। एवं दात्यवाह-अ ॥

वाह ऊठ् (६. ४. १३२)

वाहित्यन्तस्य भस्य ऊठिति सम्प्रसारणं स्यात्। इति वस्य उत्वम्। 'सम्प्रसारणाच्च' (६-१-१०८) इत्यतः पूर्वरूपत्वम्। दात्य

१. 'शम्' [illegible] २ [illegible]

ऊह् अ, 'एत्येधत्यूठ्सु' (६-१-८७) इति वृद्धिः । दात्यौहः ।

दित्यवाद् द्वित्रवर्षो गौर्दात्यौहं तद्भवादिकम् ।
दस्त्यूह इत्युणादेः स्यात् दात्यूहः पक्षिवाचकः ॥

दार्घसत्रम् । श्रेयसि भवं श्रायसम् । एवं श्रेयसोऽपत्यं श्रायस इत्याद्यपि । एषां तदादावप्यौत्वं, दाविकाकूलाः शालयः । शांशपाशाखं फलम् । व्यल्कशे भवो वैयल्कशः । स्वर्भवः सौवः । द्वारादित्वादैच् । अव्ययत्वाट्टिलोपः । कालाट्ठञि टिलोपः, सायंप्रातिकः । पौनःपुनिकः । अव्ययसमुदायत्वाट्ट्युट्युलौ नेष्टौ । अव्ययानां टिलोपस्यानित्यत्वादाराद्भव आरातीयः । 'वृद्धाच्छः' (४-२-११४) । 'येषां च विरोधः शाश्वतिकः' (२-४-९) इति सूत्रोक्त्या 'शाश्वते प्रतिषेधः' इति भाष्योक्त्या च तद्द्वयसिद्धिः । असिहत्यायां भवमासिहात्यं वैरम्, शतकुम्भे गिरौ भवं शातकौम्भं हेम — अनुशतिकादी । शातकुम्भमित्येवान्ये ॥

## प्राचां नगरान्ते (७. ३. २४)

प्राग्देशवाचिनि नगरान्ते शब्दे उभयपदवृद्धिः स्यात् । पुण्ड्रनगरे भवः, पौण्ड्रनागरः ।

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् (७. ३. २५)

कुरुजङ्गलेषु भवः कौरुजाङ्गलः, कौरुजङ्गलः । वलजं गृहद्वारं क्षेत्रं च । गौपुरवालजः । गौपुरवलजः ॥

## दिगादिभ्यो यत् (४. ३. ५४)

दिग्वर्गपूगगणोखामुखजघनवंशानुवंशदेशकालाकाशपक्षसाक्षिभ्यो यत् । दिशि भवं, दिश्यम् । वर्ग्यम् । पूग्यम् । गण्यम् । उख्यम् । मुख्यम् । जघन्यम् । अत्रोत्तमाधमपक्षौ मुखजघनार्थौ । वंश्यम् । अनुवंश्यम् । अत्र तदन्तविध्यभावाद् राजवंश्यादयः साधर्ये यतीति वामनः । देश्यम् । काल्यम् । आकाश्यम् । पक्ष्यम् । साक्ष्यम् । आद्यन्तान्तररहःपथ्यलीकयूथन्यायमित्रमेघमेधधाय्याद्भ्यश्च । आद्यम् । अन्त्यम् । अन्तरे भवं, अन्तर्यम् । रहस्यम् । पथ्यम् । अलीकम् ।

१. 'द्विमिरवौ', २. 'म्यार्थ' भ. U. S पाठः

कथ्यम् । यूथ्यम् । न्याय्यम् । मित्र्यम् । मेध्येम् । मेधो यज्ञः, मेध्यम् । धाय्याभवं धाय्यम् । अप्सु भवमित्यत्र 'अपो योनियन्मतुंषु'(वा० ६-३-१८) इति यति परे सप्तम्या अलुक् । ओर्गुणः । अप्सव्यम् । 'उदकात् संज्ञायम् (ग० सू०) । उदक्या रजस्वला । अन्यत्रौदको मत्स्यः । दिगादियदन्येभ्योऽपि दृश्यत इति स्वामी । तेन वने भवं वन्यम् । वीज्यम् ॥

शरीरावयवाच्च (४. ३. ५५)

यत् स्यात् । जठर्यम् । दन्त्यम् । मूर्धन्यम् ॥

पद्यत्यतदर्थे (६. ३. ५३)

तादर्थ्यादन्यत्र यति परे पादस्य पत् स्यात् । पादे भवं पद्यम् । तादर्थ्ये पादार्थं जलं पाद्यमिति वक्ष्यते ॥

ये च तद्धिते (६. १. ६१)

यादौ तद्धिते परे शिरसः शीर्षन्नादेशः स्यात् । शिरसि भवः शीर्षण्यः स्वरः । 'केशेषु वा वाच्यम् (वा०) ।' शीर्षण्याः शिरस्या वा केशाः । विशदाः कचा एवमुच्यन्ते । 'नस् नासिकाया यत्तस्क्षुद्रेषु' (वा० ६-१-६३) । नासिकायां भवं नस्यम् । नासायास्तु नास्यम् । 'वर्णनगरयोर्नेति वाच्यम्' (वा० ६-१-६३) । नासिक्यो वर्णः । नासिक्यं नगरम् । जाठरोऽग्निः, लालाटं ज्योतिरित्यादौ 'सोऽस्य निवासः' (४-३-८९) इत्यण् योज्यः ॥

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् (४. ३. ५६)

दृतौ भवं दार्तेयम् । कौक्षेयम् । 'कलशिर्मन्थनपात्रमिदन्तः' इति स्वामी । तत्र भवं कालशेयं तक्रम् । वास्तेयम् । 'अस्तीति धनार्थमव्ययम्' इति राम्यः । आस्तेयो मदः । आहेयम् ॥

ग्रीवाभ्योऽण् च (४. ३. ५७)

ग्रीवाशब्दादण् च ढञ् च । ग्रैवम् । ग्रैवेयम् ॥

गम्भीराञ्ञ्यः (४. ३. ५८)

'गम्भीरे भवं गाम्भीर्यम् । 'पञ्चजनाच्च वाच्यम्' (वा०) । तस्मिन्नसुरे भवः पाञ्चजन्यः शङ्खः । 'चतुर्मासाद् यज्ञे ण्यो वाच्यः' (वा०) । चतुर्मासे भवश्चातुर्मास्यो यज्ञः । 'संज्ञायामण् वाच्यः' (वा०) । चातुर्मासीति तिस्रः पौर्णमास्य उच्यन्ते ॥

## अव्ययीभावाच्च (४. ३. ५९)

अव्ययीभावसमासाद् भवार्थे ञ्यः स्यात् । परिमुखादेरेवेष्टम् । परिमुखपर्योष्ठपरिहनुपर्युलूखलानां वर्जनार्थेऽव्ययीभावः । निपातनात् सर्वतोभावेऽपीति रामः । सर्वमुखेषु भवः पारिमुख्यः प्रसादः । पार्योष्ठ्यो रागः । पारिहनव्यः प्रहारः । पार्युलूखल्यास्तण्डुलाः । वर्जनार्थे—पारिमुख्यो निचोलः । पार्योष्ठ्यं तैलमित्यूह्यम् । परैः सप्तम्यर्थेऽव्ययीभाव इति माधवः । तत्र स्वोष्ठे भवं पार्योष्ठ्यमित्यादि रम्योऽर्थः । 'उपात् स्थूलाकलापाभ्याम्' (भो० ४-३-१५८) । स्थूला हलिः, तत्समीपेभव औपस्थूल्यो वृषः । औपकलाप्यो बर्हिपक्षः । 'अनोः पथिपदयुपवंशसीतातिलयवमाषभङ्गगङ्गाशरीरेभ्यः' (भो० ४-३-१५९) । पथि पथि भवा आनुपथ्या सिकता । आनुपद्यो भृत्यः । आनुयूप्यः पशुः । आनुवंश्यं वृत्तम् । अनुसीतं भव आनुसीत्यो बीजावापः । आनुतिल्यं तैलम् । आनुयव्यः आनुमाष्यः । आनुभङ्ग्यः । भङ्गः कुसुम्भम् । आनुगङ्ग्या वाराणसी । आनुशरीर्यस्तापः । 'पर्युपानुभ्यः सीरात्' (भो० ४-३-१६०) पारिसीर्यम् । औपसीर्यम् । आनुसीर्यम् । प्रतिशाखं भवं प्रातिशाख्यमिति माधवः । औपकर्ण्यमिति च सुभद्राहरणे ॥

## अन्तःपूर्वपदाट्ठञ् (४. ३. ६०)

अन्तःपूर्वपदादव्ययीभावाद् भवे ठञ् । अन्तर्गेहं भवमान्तर्गेहिकम् । 'अन्तःपुरात् स्त्रीगणार्थेठन् वाच्यः' (वा०) । अन्तःपुरिका । पुरान्तर्भागे भवमान्तःपुरिकमेव । 'समानाट्ठञ् वाच्यः' (वा०) ।

१. 'सभ' क. M. U. S. पाठ. २. 'मित्यादूह्यम्'. ३. 'पे भ', ४. 'भङ्गगङ्गाशरीरेभ्यः पथि भवा' M. U. S. पाठः. ५. 'भा', ६. 'ल्यं', ख. पाठ. ७ 'बीजावपनम् । आ' ख. 'बीजवापः' M. U. S. पाठः. ८. 'भङ्गा', ९. 'कर्णमिति', १०. 'ठन् वाच्यः । आन्तःपुरिका' M. U. S. पाठः.

समानेषु भवः, सामानिकः । 'तदादेश्च' (ओ० ४-२-१६४) । सामानग्रामिकः । सामानदेशिकः । 'अध्यात्माधिदेवाधिभूतोर्ध्वदेहोर्ध्वन्दमोर्ध्वमुहूर्ताकस्मादमुष्मिन्लोकदाचित्क्वचिदमुत्रपरत्रादिभ्यश्च'। आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् । द्वावनुशतिकादी । और्ध्वदेहिकं प्रेतकर्म । इमादूर्ध्वभवमौर्ध्वन्दमिकं ज्ञानम् । निपातनान्मान्तत्वम् । मान्तमव्ययं वा । एवमूर्ध्वमौहूर्तिकम् । 'लिङ्चोर्ध्वमौहूर्तिके' (३-३-१६४) इति निपातनादुत्तरपदवृद्धिः । आकस्मिकम् । अस्य दान्तत्वाश्रयणात् कत्वाभावेऽव्ययत्वाट्टिलोप इति रामः । अमुष्मिल्लोके भवमामुष्मिकम् । निपातनादलुक् । नान्तत्वाट्टिलोपः । शैषिकम् । तान्तत्वाद्धस्य कः, कादाचित्कम् । काचित्कम् । आमुत्रिकम् । पारत्रिकम् । आद्युक्तेराकृतिगणोऽयम् । तेन, ऐहिकम् । आन्तरालिकम् । चातुरर्थिकम् । सामूहिकम् । देवेषु भवं दैविकम् । वैदिकमिति चाह माधवः । सौवग्रामिकः । सौवनगरिकः ।

द्वारादिषु स्वशब्दोक्तेस्तदादेरपि चैजयम् ।
स्वाभाविकस्वार्थिकादेरैच् न भाष्यप्रयोगतः ॥

प्रयोगे भवं प्रायौगिकम्[1], अतिशये भवमातिशायिकम् — अनुशतिकादी । 'लोकान्ताट्ठञ् वाच्यः' (वा०) । ऐहलौकिकम् । पारलौकिकम् । एतावप्यनुशतिकादी । 'मध्यादीयः' (वा०) । मध्यीयः । 'मण्मीयौ च' (वा०) । शास्त्रादेः मध्ये भवो माध्यमः । मध्यमीयः । गहाद्युक्त्या पृथिवीमध्यजातादिरेव मध्यमीयः स्यादिति भेदः ।

*मध्यशब्दस्य मान्तत्वं स्याद् दिनन्प्रत्ययस्तथा ।
मध्यंदिनाः प्रगायन्ति सदोमध्यभवा इमे ॥

---

१. 'प्रायोगिकम्' M. U S पाठः

* "मध्यो मध्यं दिनण् चास्मात् । मध्यशब्दोऽयं मध्यंभावमापद्यते दिनण् चास्मात् प्रत्ययो भवतीति वक्तव्यम् । माध्यन्दिन उपगायति" इति 'अन्तःपूर्वपदाट्ठञ्' (४-३-६०) इति सूत्रे भाष्यम् । (Chawkhamba Sanskrit Series, Benares.)

अत्रत्यमहाभाष्यमातृकयोर्मूलानुसारी पाठो दृश्यते । स च "मध्यो मध्यं दिनन् चास्मात् । मध्यशब्दो मध्यंशब्दमापद्यते, दिन(णा ? न् चा)स्मात् प्रत्ययो वक्तव्य. । मध्यन्दिन उपगाय(न्ति ? ति) (Mahābhāṣya Manuscript No. 836, Oriental Manuscripts Library, University of Travancore, Trivandrum).

द्वार्थस्त्वन्यः समासे वक्ष्यते। 'स्थामाजिनान्तेभ्यो भवप्रत्ययस्य गाच्यः'(वा०)। अश्वत्थाम्नि भव अश्वत्थामा प्रताप:। कृष्णाजिने कृष्णाजिनो यष्टा। अग्निष्टोमादिभ्यो मन्त्र इति ओजः। ष्टोमे भवो मन्त्रोऽग्निष्टोमः, राजसूयः इति ॥

ग्रामात् पर्यनुपूर्वात् (४. ३. ६१)

पर्यनुपूर्वात् ग्रामान्तादव्ययीभावाट्ठञ्। पारिग्रामिकम्। आनु-ग्रामिकम् ॥

जिह्वामूलाङ्गुलेश्छः (४. ३. ६२)

जिह्वामूलीयम्। अङ्गुलीयम् ॥

वर्गान्ताच्च (४. ३. ६३)

कवर्गीयो वर्णः ॥

अशब्दे यत्खावन्यतरस्याम् (४. ३. ६४)

शब्दादन्यत्र वर्गान्ताद् यत्खौ छ च विकल्पतः।
अरिवर्ग्योऽरिवर्गीणोऽप्यरिवर्गीय इत्यपि ॥

दे तु छ एवोक्तः ॥

कर्णललाटात् कनलङ्कारे (४. ३. ६५)

कर्णभवोऽलङ्कारः कर्णिका। ललाटिका। स्वभावात् स्त्रीत्वम्। गार्थमात्रे तु यत्। कर्ण्यम्। ललाट्यम्। समानकालीनमुचर-कालीनमित्यादि कालान्तात् खो दृश्यते। न च लक्षणं दृष्टम् ॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः (४. ३. ६६)

व्याख्येयग्रन्थनामभ्यस्तस्य व्याख्यान इत्यर्थे तत्र भवे चा-दिः स्यात्। करणे ल्युट्। सुपां व्याख्यानो ग्रन्थः सौपः। तैङः। तार्तः। सुप्सु भवं च सौपम् ॥

बह्वचोऽन्तोदात्ताट्ठञ् (४. ३. ६७)

षत्वणत्वयोर्व्याख्यानो ग्रन्थः षात्वणत्विकः। तत्र भवं चैवम् ॥

१. 'कर्णभावात्', २. अन्त्यादिनाम', ३. 'व्याख्यानग्रन्थः' M. P. S. पाठः

## क्रतुयज्ञेभ्यश्च (४. ३. ६८)

ठञ् स्यात्। अग्निष्टोमार्थकल्पादीनां व्याख्यानस्तत्रभवो वा आग्निष्टोमिकः। यज्ञात्तु—पाकयज्ञिकः। क्रतवः सोमयागाः। अन्ये यज्ञाः॥

## अध्यायेष्वेवर्षेः (४. ३. ६९)

व्याख्येयग्रन्थपराद्दषिनाम्न उक्तार्थयोरध्याये वाच्य एव ठञ् स्यात्। वसिष्ठोक्तग्रन्थस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः॥

## पौरोडाशपुरोडाशात् ष्ठन् (४. ३. ७०)

पुरोडाशविधिवाक्यं पुरोडाशः। तत्संस्कारमन्त्राः पौरोडाशा इति माधवः। ताभ्यामुक्तार्थद्वये ष्ठन् स्यात्। षो ङीपर्थः। पौरोडाशिकः। पुरोडाशिकः॥

## छन्दसो यदणौ (४. ३. ७१)

छन्दसो व्याख्यानं तद्भवं वा छन्दस्यम्। छान्दसम्॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् (४. ३. ७२)

द्व्यचः शब्दादृदन्ताच्च ब्राह्मणादेश्च ठग् द्वयोः।
ऐष्टिकः पाशुको द्व्यज्भ्यश्चातुर्होतृक इत्यृतः॥

ब्राह्मणिकः। आर्चिकः। प्राथमिकः। आध्वरिकः। पौरश्चरणिकः। नामाख्यातयोस्तु व्यस्तयोः समस्तयोश्च। नामिकः। आख्यातिकः। नामाख्यातिकः॥

## अणृगयनादिभ्यः (४. ३. ७३)

ऋगयनो नाम ग्रन्थः। तद्व्याख्यानं तत्र भवं वा आर्गयनम्। गकारव्यवधानात् 'पूर्वपदात् संज्ञायाम् —' (८-४-३) इति णत्वं न। एवं नैरुक्तं, नैयायं वैयाकरणमित्यादि। 'बह्वचो —' (४-२-६७) इत्यादेरपवादोऽयम्॥

---

१. 'व्याख्यानं तत्र' भ. घ ङ. पाठः

### तत आगतः (४. ३. ७४)

अस्मिन्नर्थेऽणादिः । मधुराया आगतो माधुरः । प्रलयस्याणि 'केकयमित्रयु—'(७-३-२)इति यादेरियः । शरदः प्रलयान्नाशादागतं प्रालेयं हिमं, तस्य हेमन्तजत्वात् । मालेयमिति च दृश्यते । कुतः कुत आगतः कौतस्कुतः । वीप्सादौ द्वित्वम् । कस्कादिसः ॥

### ठगायस्थानेभ्यः (४. ३. ७५)

आयः स्वामिग्राह्यो भागः । तत्स्थानेभ्य आगते ठक् । आपणिकं धनम् ॥

### शुण्डिकादिभ्योऽण् (४. ३. ७६)

आयस्थानठकोऽपवादः । शुण्डिका पानभूः । तत आगतं शौण्डिकम् । औदपानम् । तैर्थम् । वार्णम् ॥

### विद्यायोनिसम्बन्धेभ्यो वुञ् (४. ३. ७७)

विद्यासम्बन्धवचनाद् योनिसम्बन्धवाचकात् ।
आगते वुञ् शैष्यकोऽर्थः पैतामहक इत्यपि ॥

### ऋतष्ठञ् (४. ३. ७८)

विद्यायोनिजसम्बन्धवचनादृदन्ततः ।
हौतृकं होतुरायातं मातृकं स्वासृकं तथा ॥

### पितुर्यच्च (४. ३. ७९)

ठञ्च स्यात् । रीङि यस्येति लोपः । पित्र्यम् । ठञि पैतृकम् ॥

### गोत्रादङ्कवत् (४. ३. ८०)

तस्येदमर्थे सङ्घाङ्कलक्षणेष्विति वर्णनात् ।
अङ्कशब्देन तस्येदमर्थ एवात्र लक्ष्यते ॥
तेन गोत्राद् वुञादिः स्यात् तद्वदेवागते भवेत् ।
ततश्चौपगवात् भासं स्वादौपगवकं धनम् ॥

१. 'ठ' ग- पाठः. २. 'धनम् । औन्दवाहिरम्' ग. घ. ङ, पाठः

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः (४. ३. ८१)

हेतोर्नृनाम्नश्चागतेऽर्थे रूप्यप्रत्ययः स्यात्। ज्ञानाद्धेतुभूतादागतं ज्ञानरूप्यम्। ज्ञानीयम्। एवं नलादागतं नलरूप्यम्। नालम्॥

मयट् च (४. ३. ८२)

हेतुमनुष्येभ्य आगते मयट् च स्यात्। ज्ञानमयम्। नलमयम्। अत्र द्विगोर्लुङ् नेष्टः। त्रिवेदरूप्यस्त्रिवेदमयो वा धर्मः॥

प्रभवति (४. ३. ८३)

ततः प्रभवतीत्यर्थेऽण् गङ्गा हैमवती यथा।
तत्र प्रथमदृष्टत्वं प्रभवो न तु जातता॥

विदूराञ्ञ्यः (४. ३. ८४)

वैदूर्यो मणिः॥

तद्गच्छति पथिदूतयोः (४. ३. ८५)

तदिति द्वितीयान्ताद् गच्छतीत्यर्थे मार्गे दूते च वाच्येऽणादिः। मधुरां गच्छन् माधुरः पन्था दूतश्च। तत्स्थानां गमनात् पन्था गच्छतीत्युक्तिः॥

अभिनिष्क्रामति द्वारम् (४. ३. ८६)

तदभिनिष्क्रामतीत्यर्थे द्वारे वाच्ये अणादिः। औद्यानं द्वारम्। पथो गमनवद् द्वारस्याभिनिष्क्रान्तिः॥

अधिकृत्य कृते ग्रन्थे (४. ३. ८७)

तदधिकृत्य कृतो ग्रन्थ इत्यर्थेऽणादिः। भरतानधिकृत्य कृतं भारतम्। शाकुन्तलम्। ज्योतिषमित्यत्र संज्ञापूर्वकत्वादवृद्धिः। उणादिप्रत्ययसत्त्वात् षः। 'लुबाख्यायिकासु बहुलम्'(वा०)॥ वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता। बहुलोक्तेर्भैमरथीति न लुप्। तत एवानाख्यायिकास्वपि क्वचिल्लुप्। कुमारसम्भवः॥

१. 'तत्र' क, M. U. S. पाठः. २. 'अतः' M. U. S. पाठः.

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः (४. ३. ८८)

शिशुक्रन्दयमसभशब्दाभ्यां द्वन्द्वसमासादिन्द्रजननादेश्चोक्तेऽर्थे छः स्यात् । शिशूनां क्रन्दनविषयो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । द्वन्द्वात् — किरातार्जुनीयम् । दैवासुरं राक्षोसुरमित्यादौ छो नेष्टः । इन्द्रजननीयम् । सीतान्वेषणीयम् । प्रद्युम्नागमनीयम् इत्याद्याकृतिगणः ॥

सोऽस्य निवासः (४. ३. ८९)

मथुरा निवासोऽस्य माथुरः ।

पृथिवीमध्यादण् स्यान्मध्यमभावश्च तस्य चरणेऽर्थे ।
पृथिवीमध्यनिवासाश्चरणाः केचिद्धि माध्यमा नाम ॥

अभिजनश्च (४. ३. ९०)

सोऽस्याभिजन इत्यर्थेऽण् माथुरोऽयमिह स्थितः ।
प्राग्वासभूरभिजनो निवासस्त्वद्य वासभूः ॥

आयुधजीविभ्यश्छः पर्वतात्[२] (४. ३. ९१)

पर्वतनामभ्यः सोऽस्याभिजन इत्यर्थे आयुधजीविनोऽभिधातुं छः स्यात् । तेषु वाच्येष्वित्यर्थः । गन्धमादनीया योधाः ॥

शाण्डिकादिभ्यो ञ्यः (४. ३. ९२)

एभ्यः सोऽस्याभिजन इत्यर्थे ञ्यः स्यात् । शाण्डिक्यः । शकदेशाभिजनः शाक्यः इत्यादि ॥

[५]सिन्धुतक्षशिलादिभ्यामणञौ (४. ३. ९३)

अणि सैन्धवः । कैष्किन्धः इत्यादि । अञि ताक्षशिलः । पर्वताभिजना पार्वतीत्यादि ॥

१. 'स्य' M. U. S. पाठः. २. 'पर्वते' M. U. S पाठः. मुद्रितपाठोऽस्मदि... ५. 'सिन्धुतक्षशिलादिभ्यो पाठः । ३. 'पुरतः', ४. '...' M. U. S. पाठः. ... इति M. U. S. मुद्रितपाठ... 'सिन्धुतक्षशिलादिभ्यामणञौ' इत्येव पाठो ... [illegible]

तूदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः (४. ३. ९४)

उक्तेऽर्थे क्रमात् स्युः । ढक्, तौदेयः । छण्, सालातुरीयः पाणिनिः । ढञ्, वार्मतेयः । यक्, कौचवार्यः ॥

भक्तिः (४. ३. ९५)

कर्मणि क्तिन् । सोऽस्य सेव्य इत्यर्थेऽणादिः । विष्णुर्भक्ति[1]-रस्य, वैष्णवः । पाशुपतः । स्त्रैणः ॥

अचित्तादेशकालाट्ठक् (४. ३. ९६)

देशकालवर्जितादचेतनादुक्ते[2]ऽर्थे ठक् । अपूपो भक्तिरस्य, आपूपिकः । पायसिकः । देशकालाभ्यां तु माथुरः । ग्रैष्मः ॥

महाराजाट्ठञ् (४. ३. ९७)

महति राजनि कुबेरे वा भक्तो माहाराजिकः ॥

वासुदेवार्जुनाभ्यां वुन् (४. ३. ९८)

वासुदेवकोऽहम् । अर्जुनकः ॥

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् (४. ३. ९९)

गोत्रात् क्षत्रियनाम्नश्चोक्तार्थे बहुलं वुञ् । ग्लौचुकायनिभक्तो[3] ग्लौचुकायनकः । क्षत्रियात्—नाकुलकः । साहदेवकः । बहुलोक्तेः पाणिनिभक्तः पाणिनीय इत्यादौ गोत्रादपि वुञ् न ॥

जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने (४. ३. १००)

बहुवचने जनपदेन समानशब्दा ये जनपदस्वामिनः, तेभ्यो भक्त्यर्थे जनपदवत् सर्वं स्यात् । अङ्गा इति जनपदेन समानशब्दाः राजानः, ते भक्तिरस्येत्याङ्गकः । द्वित्वैकत्वयोरप्येवम् । आङ्गयोराङ्गे वा भक्तोऽप्याङ्गकः । 'जनपदतदवध्योश्च'(४-२-१२४) इत्याद्युक्तो[4] वुञ् । एवं 'मद्रवृज्योः कन्' (४-२ १३१) मद्रराजभक्तो मद्रकः ॥

---

१. 'विष्णुभक्तिरस्य' M. U S. पाठः. २. 'क्ता' ख. ग. M. U S. पाठः.
३. 'ग्लौचुकायनिभक्तो', ४ 'इत्याद्युक्तो' M. U. S. पाठ.

## तेन प्रोक्तम् (४. ३. १०१)

अस्मिन्नर्थेऽणादिः । पाणिनीयं शास्त्रम् । शौनकीया शिक्षा ।

अकर्तृणोक्तमेवात्र प्रोक्तं न कृतमेव तद् ।
शास्त्रं च सविशेषोक्तं पाणिन्याद्यैर्न तद् कृतम् ॥

भोज आह — 'अथर्वणोऽण् वेदे' (४-३-२३९) । अथर्वणा प्रोक्तो वेद आथर्वणः । 'लुक् च वा' (४-३-२४०) । अथर्वा वेदः । 'वसिष्ठादिभ्योऽनुवाकादिषु'(४-३-२४१) । एभ्योऽनुवाकादिषु वाच्येषु प्रोक्तप्रत्ययस्य वा लुक् । वसिष्ठेन प्रोक्तोऽनुवाकोऽध्यायो वा वसिष्ठः । वासिष्ठः । विश्वामित्रः । वैश्वामित्रः । इति ॥

## तित्तिरिवरतन्तुखण्डिकोखाच्छ (४. ३. १०२)

एभ्यः प्रोक्ते छण् । 'छन्दोब्राह्मणानि च तद्विषयाणि'(४-२-६६)इत्यध्येतृवेदित्रर्थयुक्तस्यैव प्रयोगः । तित्तिरिणा प्रोक्तमधीयानास्तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । 'छन्दोब्राह्मणानि च—' (४-२-६६) इति चकारादितः परं छन्दोब्राह्मणेभ्योऽन्यत्राप्यध्येतृवेदितृनियम इष्यते ॥

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः (४. ३. १०३)

आभ्यामृषिनामभ्यां प्रोक्ते णिनिः । काश्यपेन प्रोक्तं कल्पमधीयानाः, काश्यपिनः । कौशिकिनः ॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च (४. ३. १०४)

णिनिः स्यात् । कलापिशिष्येण तुम्बुरुणा प्रोक्तमधीयानाः, तौम्बुरविणः । वैशम्पायनशिष्येण कमलेन प्रोक्तमधीयानाः, कामलिनः ॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु (४. ३. १०५)

पुरातनैर्मुनिभिः प्रोक्तेषु ब्राह्मणेषु कल्पेषु च वाच्येषु णिनिः । ऐतरेयेण प्रोक्तं ब्राह्मणमधीयानाः ऐतरेयिणः । पैङ्गयेन प्रोक्तः

१. 'का आथर्वणो वेदः । ञ' ग. पाठः. २. 'गङ्गल्पन' ग. पाठः.

कल्पः पैङ्गी । अत्र 'आपत्यस्य—'(६-४-१५१) इति यलोपः । तद्विषयता चास्य नेष्टा । अचिरकालेषु तु न । याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि ब्राह्मणानि । अत्र 'कण्वादिभ्यो गोत्रे' (२-४-१११) इति शैषिकोऽण् ॥ प्रतिपदविहितानां छणादीनामेव तद्विषयतेत्यणस्तद्विषयता न ॥

शौनकादिभ्यश्छन्दसि (४. ३. १०६)

एभ्यः प्रोक्ते वेदे वाच्ये णिनिः । शौनकेन प्रोक्तं छन्दोऽधीयानाः, शौनकिनः । वाजसनेयिनः । शार्ङ्गरविणः । छन्दसोऽन्यत्र शौनकीया शिक्षा ॥

कठचरकाल्लुक् (४. ३. १०७)

आभ्यां प्रोक्तप्रत्ययस्य लुक् । कठेन प्रोक्तमधीयानाः, कठाः । चरकाः । अच्छन्दस्त्वे तु तद्विषयत्वाभावःचरकेण प्रोक्तं चरकं शास्त्रमित्यपि भाष्यः । वृत्तौ तु छन्दसि वाच्य एव लुगुक्तः । काठश्चारको वा श्लोकः ॥

कलापिनोऽण् (४. ३. १०८)

अस्माद् वैशम्पायनशिष्यादण् । कलापिना प्रोक्तमधीयानाः कालापाः । सब्रह्मचार्यादित्वाट्टिलोपः । मधुरादेश्छन्दोधार्यमणिष्टः । माधुरेण प्रोक्ता माधुरी वृत्तिः ॥

छगलिनो ढिनुक् (४. ३. १०९)

ढमात्रस्य एय् । छगलिन् एयिन् , 'नस्तद्धिते' (६-४-१४४) । छगलिना प्रोक्तमधीयानाः छागलेयिनः ॥

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः (४. ३. ११०)

कर्मन्दकृशाश्वादिनिः (४. ३. १११)

भिक्षुनटसूत्रयोरेव । कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयानाः कर्मन्दिनो भिक्षवः । एवं कृशाश्विनो नटाः ॥

तेनैकदिक् (४. ३. ११२)

अस्मिन्नर्थेऽणादिः । सुदाम्ना तुल्यदिग्भवा, सौदामनी विद्युत् । 'सुदामा श्वेतदीपः' इति टीकासर्वस्वे । 'कश्चिदद्रिः' इति स्वामी । तस्य स्फटिकाकारत्वात् तद्दिशि बहु प्रकाशत इत्यर्थः ॥

तसिश्च (४. ३. ११३)

उक्तार्थे तसिश्च स्यात् । स[3] च स्वरादित्वादव्ययम् । सेतुतो लङ्का । तद्दिशीत्यर्थः ॥

उरसो यच्च (४. ३. ११४)

तसिश्च स्यात् । उरस्यो वर्णः । उरस्तः । वर्णस्यान्तर्भवत्वादुरोभेदत्वं नास्तीत्येकदिक्त्वमेव ॥

उपज्ञाते (४. ३. ११५)

तेन प्रथमं ज्ञात इत्यर्थेऽणादिः । प्राभाकरः पक्षः । तेनैव स्वयं कल्पित इत्यर्थः ॥

कृते ग्रन्थे (४. ३. ११६)

तेन कृते ग्रन्थ इत्यर्थेऽणादिः । भारवीयं काव्यम् ॥

संज्ञायाम् (४. ३. ११७)

नाम्नि तेन कृतमित्येतावत्यर्थेऽणादिः । माक्षिकं मधु सारघम् ॥

कुलालादिभ्यो वुञ् (४. ३. ११८)

एभ्यः कृतेऽर्थे नाम्नि वुञ् । कौलालकमिति घटशरावादेः,

१. 'स्यात् ॥' क. पाठः. २. '[illegible] स्यात्' क. ग. पाठः. ३. '[illegible]', ४. [illegible] ५. '[illegible]' ग. ख. पाठः. ६. 'कृते ग्रन्थे' [illegible] [illegible] । ख. पाठः.

न तत्कृतमन्यत् । मधुना कृतो माधवकः सुराभेदः । परिषदा कृतं पारिषदकमित्यादि ॥

क्षुद्राभ्रमरवटरपादपादञ् (४. ३. ११९)

नास्त्येन । क्षुद्राभिः कृतं क्षौद्रं मधु । भ्रामरं मधु । वाटरम् । पादपम् ॥

तस्येदम् (४. ३. १२०)

तस्य सम्बन्धीत्यर्थेऽणादिः । विष्णोरिदं वैष्णवं चक्रम् । एवम् आश्वपतम् , बार्हस्पत्यम् , औत्सम् , स्त्रैणम् , राष्ट्रियम् , शालीयम् , मासिकमिति ॥

गोत्रेऽलुगचि (४. १. ८९)

'यस्कादिभ्यो गोत्रे' (२-४-६३) इत्यादिबहुवचनोक्तो लुगजादौ प्राग्दीव्यतीयप्रत्यये कर्तव्ये न स्यात् । तेन यस्कानामिदमित्यत्रापि यास्केति प्रकृतिः स्यात् । ततो वृद्धाच्छः । यास्कीयम् । एवम् 'अत्रिभृगुकुत्स—' (२-४-६५) इति लुक्प्राप्तौ, अत्रीणामिदम् आत्रेयीयम् । भृगूणामिदं भार्गवीयम् ॥

यूनि लुक् (४. १. ९०)

अजादौ प्राग्दीव्यतीये कर्तव्ये युवप्रत्ययस्य लुक् स्यात् । कपिञ्जलादस्य पुत्रः पौत्रश्चात इति, कापिञ्जलादिः । ततो यूनि कुर्वादित्वात् ण्ये कृते कापिञ्जलाद्यः । कापिञ्जलाद्यस्येदमित्यत्र युवप्रत्ययस्य ण्यस्य लुकि इञन्तमेव प्रकृतिः । तत 'इञश्च' (४-२-११२) इति शैषिकोऽण् वृद्धाच्छं बाधित्वा स्यात् । कापिञ्जलादं धनम् । एवं पाणिनस्यापत्यं युवा पाणिनिः । तत 'इञश्च' (४-२-११२) इत्यणि प्राप्ते युवप्रत्ययस्येञो लुकि पाणिनशब्दादेव वृद्धाच्छः । पाणिनीयम् ॥

फक्फिञोरन्यतरस्याम् (४. १. ९१)

---

१. 'पाद्यपसम्' M. U. b. पाठः. २. 'नि द' म पाठः, ३. 'अत कापि' न. M. U. b. पाठः.

युवप्रत्यययोः फक्फिञोरजादौ प्राग्दीव्यतीये कर्तव्ये वा लुक् स्यात् । यूनि 'यञिञोश्च' (४-१-१०१) इति फक् 'अणो द्व्यचः' (४-१-१५६) इति फिञ्चोक्तः । तयोः वृद्धाच्छे कर्तव्ये वा लुक् । गार्ग्यायणस्येदं गार्गीयं, गार्ग्यायणीयं वा । कार्तायणेरिदं कार्तीयं कार्तायणीयं वेति । सब्रह्मचारिण इदं साब्रह्मचारम् । 'इनण्य—' (६-४-१६४) इति प्रकृतिभावे प्राप्ते सब्रह्मचार्यादिना टिलोपः । एवं यष्टिपीठेन चरन् पङ्ग्वादिः पीठसर्पी । तस्येदं पैठसर्पम् । कौथुमम् । शैलालम् । शैखण्डम् । सौकरसद्मम् । सौपर्वम् । 'शुनः सङ्कोचे' (वा० ६-४-१४४) इति टिलोपः । शौवः सङ्कोचः । अन्यत्र शौवनो रदः । द्वारादित्वादैच् । सौर्यस्येदमागस्त्यस्येदमिति वृद्धाच्छे 'सूर्यागस्त्ययोश्छे ङ्यां च' (वा० ६-४-१४९) इति यलोपः । सौरीयम् । आगस्तीयम् । मनुष्यस्येदमित्यणि 'आपत्यस्य च —' (६-४ १५१) इति यलोपः, मानुषं जन्म । मानुषस्य तु वृद्धाच्छे, मानुषीयम् । उक्ष्ण इदमौक्षम् । 'औक्षमनपत्ये' (६-४ १७३) इति निपातनाट्टिलोपः । अपत्ये त्वौक्ष्ण इत्युक्तम् । स्वादुमृदुन इदं सौवादुमृदवम् । स्वस्येदं सौवम् । स्वरस्येदं सौवरम् । द्वारादयः ॥

न कर्मव्यतीहारे (७. ३. ६)

अस्मिन्नर्थे ऐज् न । व्यत्यासेन भवन् व्यतिभवमानः तत्सम्बन्धि व्यातिभवमानम् । एवं कर्मव्यतीहारे णचि व्यावहासीत्यादावप्यैज् न । 'न णचः' इत्येव सोऽजः । श्वापदशब्दस्य संज्ञापूर्वतया वृद्धाच्छाभावादण् ॥

पदान्तस्यान्यतरस्याम् (७. ३. ९)

श्वादेः पदशब्दान्तस्याङ्गस्य ऐज् वा न स्यात् । श्वापदसम्बन्धि श्वापदं, शौवापदम् । 'न्यङ्कोर्वा' इति केचिदिति कौमुदी । न्याङ्कवं, नैयङ्कवम् । सुहृद इदं सौहार्दम् । सैरसैन्धवम् । 'हृद्भग—'(७ ३-१९) इत्युभयपदवृद्धिः । तत्र नदीसमुद्रजनपदाः सिन्धव उक्ताः । अनु-

१. 'सङ्कोचः', २. 'भवं व्यतिभवमानं तत्सम्बन्धी व्याति- भवमानः', ३. 'रदस्य', ४. 'पदं वा ।' M. U. S. पाठः. ५, 'उक्ताः । सर्वे' च—च. पाठः M. U. S. पाठः.

शतिकस्येदम् आनुशातिकम् । सर्वपुरुषाणामिदं सार्वपौरुषम् । अनुशतिकादिः ॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् (७. ३. ३०)

नञ्पूर्वाणामेषामुत्तरपदवृद्धिः स्यात् पूर्वपदस्य तु वा स्यात् । अशुचेरिदम् आशौचम् । अशौचम् । आनैश्वरम् अनैश्वरम् । आक्षैत्रज्ञम् । अक्षैत्रज्ञम् । आकौशलम् । अकौशलम् । आनैपुणम् । अनैपुणम् ।

वृद्धिहेतुषु सर्वेषु समानाः प्रक्रिया इमाः ।
अर्थाङ्गस्यात्तु कथिता भवतस्येदमर्थयोः ॥

'अणि परे वहेस्तृच्तृनोरिट् वाच्यः' (वा०) संवोढुरिदं सांवहित्रं, वैवहित्रम् । 'अग्नीधः शरणे रण् भत्वं च' । (वा० ४ ३-१२०) ।

पदत्वे धस्य जश्त्वं स्यादिति भत्वमिहोच्यते ।
अग्नीधो गृहमाग्नीध्रं तत्स्थः सोऽपि तथोच्यते ॥

'समिधामाधाने षेण्यण्' (वा० ४-३-१२०) । षलोपे णत्व-नाशादेन्यन् । सामिधेन्यो मन्त्रः । षित्वात् ङीपि 'हल—'(६-४-१५०) इति यलोपे सामिधेनी ऋक् ॥

रथाद्यत् (४. ३. १२१)

रथस्येदं रथ्यं चक्रादि । रथाङ्ग एवेष्यम् । 'रथसीताहलेभ्यो यद्विधौ'(वा०) इति तदन्तविधिना सुवर्णरथस्येदं सुवर्णरथ्यम् ॥

पत्रपूर्वादञ् (४. ३. १२२)

वाहनपूर्वाद् रथादञ् । आश्वरथस्येदम्, आश्वरथं चक्रादि । औष्ट्ररथम् ॥

पत्राध्वर्युपरिषदश्च (४. ३. १२३)

वाहनवाचिभ्योऽध्वर्युपरिषद्भ्यां चाञ् । 'पत्राद् वाह्य एव'(वा०) ।

१. 'पूर्वस्य' [illegible] पाठः. २. [illegible]., ३. [illegible] पाठः ४. [illegible], ५. [illegible] मुद्रितपाठः. ६. [illegible], ७ [illegible], ८. ९. 'गुरवे' [illegible] पाठः.

उष्ट्रस्यायं वहनीय औष्ट्रो भारः । अध्वर्योरिदम्, आध्वर्यवम् । पारि-पदम् । परिषदः पृषोदरादित्वादिलोपे पर्षत् । तस्याप्येकदेशविकृतत्वाद् अण् । पार्षदम् ॥

## हलसीराट्ठक् (४. ३. १२४)

हलस्येदं, हालिकम् । सैरिकम् ॥

## द्वन्द्वाद् वुन् वैरमैथुनिकयोः (४. ३. १२५)

अनयोर्वाच्ययोर्द्वन्द्वसमासाद् वुन् । स्वभावात् स्त्रीत्वम् काकोलूकयोर्वैरं काकोलूकिका । मैथुनिका विवाहः । अत्रिभरद्वाजानां विवाहः अत्रिभरद्वाजिका । 'वैरे देवासुरादिभ्यो न'(वा०) । दैवासुरम् ।

## गोत्रचरणाद्वुञ् (४. ३. १२६)

आभ्यां तस्येदमर्थे वुञ् । औपगवस्येदमौपगवकं धनम् । 'चरणाद्धर्माम्नाययोरेव' (वा०) । कठानां धर्मः शाखा वा काठकं, कालापकम् ॥

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् (४. ३. १२७)

सङ्घादिसम्बन्धिविशेषेषु वाच्येष्वञ्यञिञन्तेभ्योऽण् ।

अङ्को नाम स्वसम्बन्धिगवादौ कृतमङ्कनम् ।
स्वस्यैवाचारविद्यादिचिह्नं लक्षणमुच्यते ॥

अञन्तात् बैदसम्बन्धी सङ्घो बैदः । एवमङ्को लक्षणं च । 'घोषे चेति वाच्यम्' (वा०) । बैदो घोषः । यञो-गार्गः सङ्घ इत्यादि चतुर्ष्वर्थेषु इञो-दाक्षः सङ्घ इत्यादि ॥

## शाकलाद्वा (४. ३. १२८)

अस्माच्चतुर्ष्वर्थेषु वुञण् वा । शाकलकः शाकलो वा सङ्घादिः ॥

---

१. 'स्वस्येव' M. U. S. पाठः.

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः (४. ३. १२९)

एभ्यश्चरणत्वाद्धर्माम्नाययोरेव ञ्यः। छन्दोगानां धर्मो वेदो वा छान्दोग्यम्। एवम् औक्थिक्यं, याज्ञिक्यं, बाह्वृच्यं, नाट्यम् ॥

न दण्डमाणवान्तेवासिषु (४. ३. १३०)

दण्डप्रधाना माणवा दण्डमाणवाः तेषु। शिष्येषु च वाच्येषु गोत्राद् वुञुक्तो न स्यात्। दाक्षेरिमे दाक्षाः दण्डमाणवाः शिष्या वा। 'इञश्च' (४-२-११२) इत्यणेव। विप्राग्र्याणां ग्रामरक्षार्थं यष्टिधारिणो न्यूनद्विजाः दण्डमाणवाः, वर्णिनामन्तेवास्यन्तर्भावात् ॥

रैवतिकादिभ्यश्छः (४. ३. १३१)

एभ्यस्तस्येदमर्थे गोत्रवुञ्प्राप्तौ छः। रैवतिकीयम्। औदमेघीयम् ॥

कौपिञ्जलहास्तिपदादण् (४. ३. १३२)

वुञ्प्राप्तावण्। कौपिञ्जलम्। हास्तिपदम् ॥

आथर्वणिकस्येकलोपश्च (४. ३. १३३)

अस्याण् स्यादिकलोपश्च। चरणत्वाद्धर्माम्नाययोरेव। आथर्वणम्। इतः परं शेपिका न सन्ति ॥

इति शेपिकाः ॥

तस्य विकारः (४. ३. १३४)

अस्मिन्नर्थे प्राग्दीव्यतीया अणादयः स्युः। मृत्तिकाविकारो मार्त्तिकः. 'अश्मनो विकारे वा टिलोपः' (वा० ६-४-१४४) इति वृत्तिः। आश्मनः। आश्मः। 'चर्मणः कोशे टिलोपः'। (वा० ६-४-१४४) चार्मः कोशः। अन्यत्र चार्मणं पात्रम् ॥

---

१. 'योऽर्थः' ख. छ. ज.. भ. ट. ड. पाठः. २. 'म् न। मारिषो' ग. पाठ. ३. 'सन्ति ॥ तस्य' ज., भ. ढ. ड. पाठः

अवयवे च प्राण्योषधिवृक्षेभ्यः (४. ३. १३५)

एतद्वाचिभ्यो विकारेऽवयवे च वाच्येऽण् । प्राणिभ्योऽञ् वक्ष्यते । ओषधेः-मौर्वं पत्रमित्यवयवे । मौर्वी ज्येति विकारे । वृक्षात्-खादिरं पत्रम् । खादिरं भस्म ॥

प्राण्योषधितरुभ्यस्तु विकारावयवार्थयोः ।
अन्येभ्यस्तु विकारेऽर्थे प्रत्ययाः स्युरतः परम् ॥

बिल्वादिभ्योऽण् (४. ३. १३६)

एभ्यो विकारावयवयोः वक्ष्यमाणमयडाद्यपवादोऽण् स्यात् । 'बिल्वव्रीहिमुद्गमसूरगोधूमेक्षुवेणुकार्पासीपाटलीकटीरकर्कन्धूभ्यः'(भो० ४-४-३) । बिल्वस्य विकारोऽवयवो वा, बैल्वः । वैणव इत्यादि ॥

कोपधाच्च (४. ३. १३७)

उक्तार्थयोः कोपधादण् दान्दशूकमिदं विषम् ॥

त्रपुजतुनोः षुक् (४. ३. १३८)

आभ्यां विकारेऽण् षुक् च स्यात् त्रापुषं जातुषं तथा ॥

ओरञ् (४. ३. १३९)

उवर्णान्तादुक्तार्थयोरञ् । दैवदारवम् ॥

अनुदात्तादेश्च (४. ३. १४०)

अञ् स्यात् । दाधित्थम् । कापित्थम् ॥

पलाशादिभ्यो वा (४. ३. १४१)

अञण् च । स्वरे भेदः । पालाशं खादिरं, वैकङ्कतं, शांशपमित्यादि । 'देविकाशिंशपा—' (७. ३. १) इत्यात्त्वम् ॥

शम्याष्ट्लञ् (४. ३. १४२)

टित्वात् ङीप् । शामीली समित् ॥

१. 'तादेऽण्' M. D. S. पाठः. २. 'क्ष' प, 'त्त' M. U. D. पाठः.
३. 'धि', ४. 'प' प. पाठः. ५. 'शामाली' M. U. S. पाठः.

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः (४. ३. १४३)

भक्ष्याच्छादनवर्जितयोर्विकारावयवयोर्वाच्ययोरपवादस्थलेऽपि भाषायां मयड् वा स्यात् । अश्ममयं आश्मं वा पात्रम् । दाण्डिनाद्युक्त्या थलोपेन हिरण्मयं हैरण्यं वा । भक्ष्याच्छादनयोस्तु न मयट् । त्रैहाः सक्तवः । क्षौमं वासः ॥

नित्यं वृद्धशरादिभ्यः (४. ३. १४४)

वृद्धेभ्यः शरादिभ्यश्च लोके नित्यं मयट् । आम्रमयम् । दारुमयम् । 'दारवशब्दो दुष्प्रयुक्तः' इति ब्रह्मदत्तः । शरादिभ्यस्तु 'शरदर्भतृणकुटीसोमवल्वजेभ्यः' (भो० ४-४-१७) वल्वजाः काशाः । शरमयं दर्भमयमित्यादि । अत्रापि भक्ष्याच्छादनयोर्न । शाक उपदंशः । दार्भं वासः । 'एकाचो नित्यं मयड् वाच्यः' (वा०) । मृन्मयम् । वाङ्मयम् । 'मयट् तद्रूप इति केचित्' इति कौमुदी । विष्णुमयं जगत् । तद्धिताः (४-१-७६) इति बहुवचनसामर्थ्यादनुक्ता अपि प्रत्यया इष्टा इत्यप्शब्दान्मयडर्थे करणे च यत्रपि स्यादित्याहुः । आप्यम् । अम्मयम् । आप्याः परमाणवः ॥

गोश्च पुरीषे (४. ३. १४५)

गोः पुरीषं गोमयम् ॥

पिष्टाच्च (४. ३. १४६)

अस्माद् विकारे नित्यं मयट् । पिष्टमयं हविः । पैष्टी सुरेति तु 'तस्येदम्' (४. ३. १२०) इत्यण् ॥

संज्ञायां कन् (४. ३. १४७)

पिष्टान्नाम्नि कन् । पिष्टकोऽपूपः ॥

व्रीहेः पुरोडाशे (४. ३. १४८)

मयट् स्यात् । व्रीहिमयः पुरोडाशः । त्रैहमन्यत् ॥

---

१. 'मार्थयो' ग. पाठः. २. 'स्थलेऽपि' घ, 'स्थले विभा' M. U. S. पाठः. ३. 'दिस्तु' क. घ., M. U. S. पाठः. ४. 'का' क. ख, ग. ङ. M. U. S. पाठः.

### असंज्ञायां तिलयवाभ्याम् (४. ३. १४९ )

तिलमयम् । यवमयम् । नाम्नि तैलम् । यावकम् ॥

### तालादिभ्योऽण् ( ४. ३. १५२ )

एभ्यो मयडपवादोऽण् । 'तालबार्हिणचपचमरपैयूक्षाणेवशुका-श्यामाकेभ्यः' (भो० ४-४-१०) । 'तालाद् धनुष्येव' (ग०) । तालं धनुः । अन्यत्र तालमयो मुसलः । बार्हिणं पिञ्छादि । तस्य विकारो बार्हिणं छत्रादि । चपो वंशभेदः । तद्विकारत्वात्, चापम् । चामरम् । पैयूक्षम् ॥

### जातरूपेभ्यः परिमाणे ( ४. ३. १५३)

स्वर्णार्थेभ्यः परिमाणे वाच्येऽण् । हाटकं कार्षापणम् । अन्यत्र हाटकमयी यष्टिः ॥

### प्राणिरजतादिभ्योऽञ् ( ४. ३. १५४ )

प्राणिभ्यो रजतादिभ्योऽप्यञ् स्यादुक्तार्थयोर्द्वयोः ।
शौर्कं च शौवमस्यैव स्यादनण्त्वाच्च टिलोपिता ॥

एवं राजतम् । हैमम् । काञ्चनी पुरी । सैसम् लौहम् । औदुम्बरमित्यादि ॥

### ञितश्च तत्प्रत्ययात् ( ४. ३. १५५ )

विकारावयवार्थञित्प्रत्ययान्तात् पुनस्तयोरेवार्थयोरञ् स्यात् । शमीलम्-शामीलं दारु । तद्विकारोऽपि शामीलम् । एवम् 'एण्या ढञ्' (४. ३. १५९) इत्यैणेयं चर्म । तद्विकारोऽप्यैणेयम् ॥

### क्रीतवत् परिमाणात् (४. ३. १५६)

परिमाणेभ्यः क्रीतार्थे वक्ष्यमाणठगादिः स्यात् । निष्कस्य विकारो नैष्किकम् । शतपरिमितस्य विकारः शत्यम् । अत्र संख्यापि परिमाणम् ॥

१. 'युक्षा' S. K, M. U. S. पाठः. २. 'च्छादि' M. U. S. ... 'युक्षम्' S. K, M. U. S. पाठः. ४. 'स्यात् । मि शामीलं', ... 'कः', ७. 'ञः' M. U. S. पाठः.

उष्ट्राद् वुञ् (४. ३. १५७)

औष्ट्रकं चर्म ॥

उमोर्णयोर्वा (४. ३. १५८)

औमकम् । औमम् । और्णकम् । और्णम् ॥

एण्या ढञ् (४. ३. १५९)

ऐणेयं चर्म । एणस्य तु ऐणम् ॥

गोपयसोर्यत् (४. ३. १६०)

गोविकारो गव्यम् । पयस्यम् ॥

द्रोश्च (४. ३. १६१)

¹यत् स्यात् । वृक्षविकारो द्रव्यं पात्रम् । द्रव्या खट्वा । गुणाश्रयो द्रव्यमिति पृथिव्यादेर्द्रव्यसंज्ञा तु गुणैर्द्रूयते प्राप्यत इत्यचो यति साध्येति हरः ॥

माने वयः (४. ३. १६२)

द्रोर्माने वाच्ये वयः स्यात् । द्रुवयं वृक्षकृतं मानम् ॥

फले लुक् (४. ३. १६३)

फले वाच्ये विकारावयवप्रत्ययस्य लुक् स्यात् । बदर्या विकारः फलं बदरम् । आमलकम् । 'लुक्तद्धितलुकि' (१-२-४९) इति स्त्रीप्रत्ययस्य लुक् ॥

प्लक्षादिभ्योऽण् (४. ३. १६४)

एभ्यः फलेऽण्, न लुक् । प्लाक्षम् । ²नैयग्रोधम् ॥

न्यग्रोधस्य च केवलस्य (७. ३. ५)

केवलस्य न्यग्रोधस्य आदिवृद्धिप्राप्तावैच् स्यात् । केवलस्येत्युक्तेर्न्यग्रोधमूले भवा³ न्याग्रोधमूलाः शालयः । 'प्लक्षन्यग्रोधाश्वत्थेङ्गुदीवेणुवृहतीशिमुभ्यः,(भो० ४-४-३४) ॥

१. 'यत्' क. पाठः. २. 'क्ते न्य' अ. U ङ. पाठः, 'के न्याग्रोधमूलाः' रा. पाठः.
३. 'वाः शालयो न्याग्रोधमूलाः । ठ' ख. ग. पाठः. ४. 'भद्रदारु' अ. U. ङ. पाठः.

## जम्ब्वा वा (४. ३. १६५)

जम्ब्वाः फलेऽण् वा । जाम्बवं फलम् । औरस्यः फलोत्कलुकि नपुंसकह्रस्वत्वे च कृते जम्बु फलम् ॥

## लुप् च (४. ३. १६६)

जम्ब्वाः फलेऽञो वा लुप् । लुपि प्रकृतिवल्लिङ्गेन जम्बूः फलम् ॥

## हरीतक्यादिभ्यश्च (४. ३. १६७)

एभ्यः फले लुप् । हरीतक्याः फलं हरीतकी ॥

एषु किङ्गं प्रकृतिवद् वचनं तु विशेष्यवत् ।
एकत्वेऽपि हरीतक्या हरीतक्यः फलान्यतः ॥

'हरीतकीपथ्याम्लिकाचिञ्चाद्राक्षामृद्वीकापिप्पलीकणाकोशातकीश्वेत-पार्श्यादिभ्यः (सो० ४. ४. ३७) । आद्युक्तेरेला कर्कटी इत्यादि । लुपि 'फलपाकशोषिणामुपसङ्ख्यानम्' (वा०) । ते च व्रीह्यादयः । व्रीहयः । तिलाः । 'पुष्पमूलेषु वाच्येषु बहुलं लुप्' (वा०) मल्लिकायाः पुष्पं, मल्लिका । मालती । विदार्या मूलं, विदारी । बहुलोक्तेर्वरणपुष्पं वारणं, पाटलायाः पाटलम् , ऐरण्डं[2] मूलमित्यादौ न लुप् । 'करवीराशोकचम्पककदम्बादिभ्यो लुक्[3]' (सो० ४. ४. ४१) विशेष्यलिङ्गतार्थं लुग्युक्तिः[4] । करवीरम् । अशोकम् । आद्युक्तेः कुसुम्भ्याः पुष्पं कुसुम्भम् । कोविदारम् । कर्णिकारम् । 'शिरीषह्रीवेरादिभ्यो वा लुक्' (सो० ४-४-४२) । शैरीषं शिरीषं वा पुष्पम् । ह्रैवेरं ह्रीवेरं वा मूलम् ॥

## कंसीयपरशव्ययोर्यञञौ लुक् च (४. ३. १६८)

कंसप्रकृतित्वात् कंसीयं वर्तलोहः । परशुप्रकृतित्वात् परशव्य-मयः । ताभ्यां क्रमाद् यञञौ । तयोः पूर्वप्रत्ययस्य लुक् च । कंस यञ् । परशु अञ् । वर्तलोहविकारः कांस्यम् । अयोविकारः पारशवम् ।

इत्यणादिविधिः ॥

---

१. 'क्रमवचने ज' ग. पाठः, २. 'एरण्डं', ३. 'ग्' M. U. S. पाठः. ४. 'लुक्तिः' M. U. S. 'युक्तः ।' ग. पाठः

## प्राग्वहतेष्ठक् (४. ४, १)

ठक् स्यात् पूर्वं वहत्यर्थाद् दीव्यत्यथ खनञ्जयन् ।
जितं च संस्कृततरञ्चरन्तश्चाथ जीवति ॥
हरन्निर्वृत्तसंसृष्टे उपसिक्तं च वर्तते ।
यच्छत्युञ्छन्नवत् कुर्वन् हन्ति तिष्ठति धावति ॥
गृह्णाति च चरत्येति समवैति च पश्यति ।
धर्म्यं चावक्रयः पण्यं शिल्पं प्रहरणं मतिः ॥
शीलं वृत्तं हितं भक्षा दीयते च नियोजितः ।
अध्यायी च व्यवहरन् वसतीत्यर्थसङ्ग्रहः ॥

## तेन दीव्यति खनति जयति जितम् (४. ४. २)

तेनेति करणार्थेभ्यो दीव्यतीत्याद्यर्थे[1] ठक् स्यात् । अक्षैर्दीव्यत्याक्षिकः । तर्कैर्दीव्यति व्यवहरतीति तार्किकः । एवं प्रामाणिकः । कुद्दालेन खनन् कौद्दालिकः । अक्षैर्जयत्याक्षिकः । अक्षैर्जितमप्याक्षिकं राज्यम् । शत्रुणा जितमित्यत्र करणार्थत्वाभावान्न । नन्वस्नवो[2]भवनान्वधित्वादिहापि स्यात् । स्त्रिया दीव्यन् स्त्रैणः । 'तदाहेति माशब्दादिभ्यष्ठक् वाच्यः' (वा० ४-४-१) । माशब्द इत्याह माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । स्वस्तीत्याह सौवस्तिकः । स्वर्गमनमाह सौवर्गमनिकः । द्वारादी । 'आहार्थे प्रभूतादिभ्यः (वा० ४-४-१) । क्रियाविशेषणादेव प्रभूतादेरेतत् । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । 'पृच्छतौ सुस्नातादिभ्यः' (वा० ४-४-१) । सुस्नातं पृच्छन् सौस्नातिकः । सौखरात्रिकः । अनुशतिकादित्वात् सौखशायनिकः । स्वागतिकः । अत्रैचि प्राप्ते 'स्वागतादीनां च' (७-३-७) इति न । 'गच्छतौ परदारादिभ्यः' (वा० ४-४-१) । परदारान् गच्छन् पारदारिकः । पारतल्पिकः । गौरुतल्पिकः । जान्ययात्रिकः ॥

## संस्कृतम् (४. ४. ३)

---

१. 'पंष्ठ' अ. ए. क. पाठः. २. 'नौ भवनाधिकारित्वादिहापि' क. पाठः.

करणात् संस्कृते ठक् । शौण्डिकं जलम् । कर्मभिः संस्कृतः कार्मिको द्विजः । ज्ञानिकः ॥

### कुलस्थ[1]कोपधादण् (४. ४. ४)

कुलस्था[2] मुद्गभेदाः । तैः संस्कृतं कौलस्थ[3]ं जलम् । कोपधात्, तैरकम् ॥

### तरति (४. ४. ५)

तेन तरतीत्यर्थे ठक् । उडुपेन तरन्नौडुपिकः । 'दोषद्रस्य को वाच्यः' (वा० ७-३-५१) । नाविकः । दोष्णा तरन् दौष्कः । उणादिसत्वात् षः ॥

### गोपुच्छाट्ठञ् (४. ४. ६)

ञित्वात् स्वरे भेदः । गोपुच्छेन तरन् गौपुच्छिकः ॥

### नौद्व्यचष्ठन् (४. ४. ७)

नावो द्व्यज्भ्यश्च तरत्यर्थे ठन् । नाविकः । प्लविकः । बाहुकः ॥

### चरति (४. ४. ८)

तेन चरतीत्यर्थे ठक् । गतिर्भक्षणं च गृह्यते । हस्तिना चरन् हास्तिकः । दध्ना भुङ्क्ते इति दाधिकः । स्वध्वरेण चरन् स्वाध्वरिकः । व्यावहारिकः । व्यायामिकः । स्वागतादित्वादैच्न ॥

### आकर्षात् ष्ठल् (४. ४. ९)

निकषोपलेन चरन्नाकर्षिकः । षित्वादाकर्षिकी । आकर्षादिति पाठे आकर्षिकः ॥

### पर्पादिभ्यः ष्ठन् (४. ४. १०)

अयमपि षित् । 'पर्पाश्वाश्वत्थरथजालव्यालन्या[4]सेभ्यः' (भो० ४-४-५५) । पर्पः प्लवः पङ्गूनां चरणार्थः पीठो वा, तेन चरति पर्पिकः । आश्विकः । षित्वात् पर्पिकी । 'पादस्य पच्च' (ग०) । पादेन चरन् पदिकः ॥

१. 'स्थ', २. 'त्था', ३. 'त्थं', ४. 'क' M. U. S. पाठः, ५. 'न्यासपादेभ्यः' इति S. K. पाठः. ६. 'न्' ग. पाठः.

श्वगणाट्ठञ्च (४. ४. ११).

चकारात् ठन् । श्वगणेन चरन् श्वागणिकः । श्वगणिकः । अत्र श्वन्शब्दस्य द्वारादित्वादैचि प्राप्ते* 'श्वादेरितीति वाच्यम्' (वा० ७-३-८) इति इकारादिप्रत्यये प्रतिषेधोक्त्या न स्यात् ॥

वेतनादिभ्यो जीवति (४. ४. १२)

एभ्यः तेन जीवतीत्यर्थे ठक् । 'वेतनवाहार्धवाहपादप्रेषणसुखशय्याविशशक्तिभ्यः' (भो० ४-४-५७) । वैतनिकः । 'वाहो भारः परिमाणभेदो वा । तेन जीवन् वाहिकः । आर्धवाहिकः । मूर्धवाहेति पाठः, मौर्धवाहिकः । पादिकः । प्रैषणिकः । सौखिकः । शय्याधिकृतः शाय्यिकः । वैशिकः । शाक्तिकः । 'उपाद् देशवेशहस्तस्थानस्थितनिषद्भ्यः' (भो० ४-४-५८) । औपदेशिको गुरुः । औपवेशिकः सेवकः । औपहस्तिकः, औपस्थानिकः, औपस्थितिकश्च सेवकः । औपनिषादिकः । 'व्यस्ताच्च धनुर्दण्डात्' (भो० ४-४-५९) । धानुर्दण्डिकः । उसन्तात्ठस्य कः, 'सोऽपदादौ' (८-३-३८) । 'इणः षः' (८-३-३९) धानुष्कः । दाण्डिकः ॥

वस्नक्रयविक्रयाट्ठन् (४. ४. १३)

वस्नं मूल्यं, तेन जीवन् वस्निकः । क्रयविक्रयिकः । व्यस्ताच्च क्रयिकः । विक्रयिकः ॥

आयुधाच्छ च (४. ४. १४)

ठंश्च । आयुधेन जीवन्नायुधीयः । आयुधिकः ॥

हरत्युत्सङ्गादिभ्यः (४. ४. १५).

एभ्यस्तेन हरतीत्यर्थे ठक् । उत्सङ्गेन नयत्युपादत्ते वेत्यौत्सङ्गिकः । औडुपिकः ॥

---

१. 'श्वन' M. U. S. पाठः. २. 'व्याम्फिवेश' S. K. पाठः. ३. 'स्थि' M. U. S. पाठः. ४. 'स्थानेभ्यः' इति S. K. पाठः. ५. 'ठंश्च' M. U. S. पाठः.

* 'इकारादिग्रहणं च श्वागणिकार्थम्' इति भाष्यवार्तिकम् । 'श्वादेरितीति सूत्रं कर्तव्यम्', इति भाष्यम् ।

भस्त्रादिभ्यः ष्ठन् (४. ४. १६)

पिदयम् । 'भस्त्राभरटभरणशीर्[1]र्षभारांसेभारेभ्यः'(भो०४-४-६७) । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी । भरटैर्भृत्यैर्हरन् भारटिकः । भरणिकः । शीर्षभारिकः । अंसेभारिकः । गणे पाठाद्लुक् । लुक् चास्ति । शीर्षभारिकः । अंसभारिकः ॥

विभाषा विवधवीवधात् (४. ४. १७)

आभ्यां वा ष्ठन् । उभयतो बद्धशिक्यो भारदण्डो द्वयोरर्थः । तेन हरन् विवधिकः । वीवधिकः । वेत्युक्तेष्ठकि वैवधिकः ॥

अण् कुटिलिकायाः (४. ४. १८)

कुटिलगमनं सन्दंशो वा कुटिलिका । कुटिलगत्या व्याधं हरन् मृगः कौटिलिकः । कुटिलिकयाङ्गारान् हरन्नपि कौटिलिकः ॥

निर्वृत्ते[2]ऽक्षद्यूतादिभ्यः (४. ४. १९)

'अक्षद्यूतगतानुगतगतागतयातोपयातपादस्वेदनकण्टकमर्दनेभ्यः'(भो० ४-४-६८) । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । गातानुगतिकं जाड्यम् । गातागतिकं, यातोपयातिकं च धनम् । चरणक्लेशेन जनितं पादस्वेदनिकं धनम् । दुर्देशचरणेन रिपुवधेन वा जनितं, काण्टकमर्दनिकम् । 'जङ्घायाः प्रहृतप्रहाराभ्याम्' (भो० ४-४-६९) जाङ्घा[3]प्रहृतिकं, जाङ्घा[4]प्रहारिकं च वैरम् । निर्वृत्त इति विभागादन्येभ्योऽपि । अङ्गेन निर्वृत्तमाङ्गिकम् । वाचिकम् । सत्त्वेन मनसा निर्वृत्तः सात्त्विको विकारः । 'भावप्रत्ययान्तादिमब्वाच्यः' (वा० ४-४-२०) । पाकेन निर्वृत्तं पाकिमम् । रागिमम् । सेकिमम् । छेदेन निर्वृत्तं कुट्टिमम् । टीकासर्वस्वे भावे क्तान्तादिमबुक्तेर्नात्र वचनन्तनियमः ॥

अपमित्ययाचिताभ्यां कक्कनौ (४. ४. २१)

कक्-अपमित्य निर्वृत्तम् आपमित्यकम् । कन्-याचितकम् ॥

---

१. 'शीर्षभारांसभा' इति ७. D. पाठः. २. 'वृ' ग. पाठः. ३, ४. 'प्रा'. ५. 'भावो क्ता' M. P. S. पाठः.

संसृष्टे (४. ४. २२)

तेन संसृष्टमित्यर्थे ठक् । तिलमिश्राश्चैलिकास्तण्डुलाः । मधुयुक्तं माधुकं पात्रम् । उगन्तात् कः ॥

चूर्णादिनिः (४. ४. २३)

चूर्णी ॥

लवणाल्लुक् (४. ४. २४)

ठको लुक् । लवणा यवागूः ॥

मुद्गादण् (४. ४. २५)

मुद्गसंसृष्टं मौद्गम् ॥

व्यञ्जनैरुपसिक्ते (४. ४. २६)

व्यञ्जनेभ्यस्तैरुपसिक्ते इत्यर्थे ठक् । क्षैरिकमन्नम् ॥

ओजस्सहोऽम्भसा वर्तते (४. ४. २७)

एभ्यस्तेन वर्तत इत्यर्थे ठक् । ओजसा वृत्तिं कुर्वन्नौजसिकः । साहसिकः । आम्भसिको मत्स्यः । सजलमेघो वा ॥

तत्प्रत्यनुपूर्वमीपलोमकूलम् (४. ४. २८)

तदिति क्रियाविशेषणार्थोक्तिः । प्रत्यनुपूर्वेभ्य एभ्यः तद्वर्तत इत्यर्थे ठक् । प्रतीपं वर्तते, प्रातीपिकः । प्रातिलोमिकः । प्रातिकूलिकः । आन्वीपिकः । आनुलोमिकः । आनुकूलिकः ॥

परिमुखं च (४. ४. २९)

परिमुखं वर्तत इत्यर्थेऽपि ठक् । परिवर्जने सर्वतोभावे च ।

परिहृत्य मुखं तिष्ठन् स्यात् पारिमुखिकः खलः ।
सर्वत्र मुखतो वर्ती सेवकोऽपि तथोच्यते ॥

चकारात् पारिपार्श्विकः ॥

प्रयच्छति गर्ह्यम् (४. ४. ३०)

---

१. 'वर्त', २. 'पूर्वेभ्यस्तद' अ. प. ह. पाठः.

गर्ह्यदेयवाचकात् तत् प्रयच्छतीत्यर्थे ठक् । द्विगुणार्थं द्रव्यं द्विगुणं, तद्दाता द्वैगुणिकः । त्रैगुणिकः । द्विगुणाद्यर्थं दानस्य निषिद्धत्वाद् गर्ह्यत्वम् । 'वृद्धेर्वृधुषिभावश्च वाच्यः' (वा०) । वृद्ध्यर्थं द्रव्यं वृद्धिः । तद्दाता वार्धुषिकः ॥

### कुसीददशैकादशात् ष्ठन्ष्ठचौ (४. ४. ३१)

द्वौ क्रमात् स्तः ।

षो ङीषर्थः स्वरे भेदः कुसीदं वृद्धिरुच्यते ।
तदर्थं द्रव्यमत्रोक्तं तत्प्रदाता कुसीदिकः ॥
एकादशार्थं दशकं दशैकादशमुच्यते ।
तादृक् प्रयच्छन् धनिको दशैकादशिको मतः ॥

### उञ्छति (४. ४. ३२)

तदुच्चिनोतीत्यर्थे ठक् । व्रीहीनुञ्छन् व्रैहिकः । श्यामाकिकः ॥

### रक्षति (४. ४. ३३)

तद् रक्षतीत्यर्थे ठक् । मण्डलं रक्षन् माण्डलिकः ॥

### शब्ददर्दुरं करोति (४. ४. ३४)

शब्दं संस्करोतीति शाब्दिकः । दर्दुराख्यपात्रकृद् दार्दुरिकः कुलालः । दर्दुरेत्यनुकरणशब्दो वेति हरः ॥

### पक्षिमत्स्यमृगान् हन्ति (४. ४. ३५)

पक्ष्यादिवाचिभ्यस्तान् हन्तीत्यर्थे ठक् । पक्षिहन्ता पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाफरिकः । मार्गिकः । सौकरिकः । 'अण्डजानिमिषादेर्गुणार्थत्वेनासंज्ञात्वान्न' इति नाथः ॥

### परिपन्थं च तिष्ठति (४. ४. ३६)

परिपथपर्यायः परिपन्थशब्दोऽस्ति । तस्माद् तिष्ठति हन्तीति चार्थे ठक् । मार्गवत् परिद्ध्यर्थः ।

---

१. 'रोति शा' ग. घ. ङ. पाठः. २. 'वर्द्', ३. 'दार्द', ४. 'दर्द' ग. घ. ङ. छ. पाठः. ५. 'हरिः' छ. पाठः.

संसृष्टे (४. ४. २२)

तेन संसृष्टमित्यर्थे ठक् । तिलमिश्रास्तैलिकास्तण्डुलाः । मधु-युक्तं माधुकं पात्रम् । उगन्तात् कः ॥

चूर्णादिनिः (४. ४. २३)

चूर्णी ॥

लवणाल्लुक् (४. ४. २४)

ठको लुक् । लवणा यवागूः ॥

मुद्गादण् (४. ४. २५)

मुद्गसंसृष्टं मौद्गम् ॥

व्यञ्जनैरुपसिक्ते (४. ४. २६)

व्यञ्जनेभ्यस्तैरुपसिक्त इत्यर्थे ठक् । क्षैरिकमन्नम् ॥

ओजस्सहोऽम्भसा वर्तते (४. ४. २७)

एभ्यस्तेन वर्तत इत्यर्थे ठक् । ओजसा वृत्तिं कुर्वन्नौजसिकः । साहसिकः । आम्भसिको मत्स्यः । सजलमेघो वा ॥

तत्प्रत्यनुपूर्वमीपलोमकूलम् (४. ४. २८)

तदिति क्रियाविशेषणार्थोक्तिः । प्रत्यनुपूर्वेभ्य एभ्यः तद्वर्तत इत्यर्थे ठक् । प्रतीपं वर्तते, प्रातीपिकः । प्रातिलोमिकः । प्राति-कूलिकः । आन्वीपिकः । आनुलोमिकः । आनुकूलिकः ॥

परिमुखं च (४. ४. २९)

परिमुखं वर्तत इत्यर्थेऽपि ठक् । परिवर्जने सर्वतोभावे च ।

परिहृत्य मुखं तिष्ठन् स्यात् पारिमुखिकः खलः ।
सर्वत्र मुखतो वर्ती सेवकोऽपि तथोच्यते ॥

चकारात् पारिपार्श्विकः ॥

प्रयच्छति गर्ह्यम् (४. ४. ३०)

१. 'वर्त', २. 'पूर्वेभ्यस्तद्' M. U. S. पाठः.

गर्ह्यदेयवाचकात् तत् प्रयच्छतीत्यर्थे ठक् । द्विगुणार्थं द्रव्यं द्विगुणं, तद्दाता द्वैगुणिकः । त्रैगुणिकः । द्विगुणाद्यर्थं दानस्य निषिद्धत्वाद् गर्ह्यत्वम् । 'वृद्धेर्वृधुषिभावश्च वाच्यः' (वा०) । वृद्ध्यर्थं द्रव्यं वृद्धिः । तद्दाता वार्धुषिकः ॥

## कुसीददशैकादशात् ष्ठन्ष्ठचौ (४. ४. ३१)

द्वौ क्रमात् स्तः ।

षो ङीषर्थः स्वरे भेदः कुसीदं वृद्धिरुच्यते ।
तदर्थं द्रव्यमत्रोक्तं तत्प्रदाता कुसीदिकः ॥

एकादशार्थं दशकं दशैकादशमुच्यते ।
तादृक् प्रयच्छन् धनिको दशैकादशिको मतः ॥

## उञ्छति (४. ४. ३२)

तदुच्चिनोतीत्यर्थे ठक् । व्रीहीनुञ्छन्, व्रैहिकः । श्यामाकिकः ॥

## रक्षति (४. ४. ३३)

तद् रक्षतीत्यर्थे ठक् । मण्डलं रक्षन् माण्डलिकः ॥

## शब्ददर्दुरं करोति (४. ४. ३४)

शब्दं संस्करोतीति शाब्दिकः । दर्दुराख्यपात्रकृद् दार्दुरिकः कुलालः । दर्दुरेत्यनुकरणशब्दो वेति हरः ॥

## पक्षिमत्स्यमृगान् हन्ति (४ ४. ३५)

पक्ष्यादिवाचिभ्यस्तान् हन्तीत्यर्थे ठक् । पक्षिहन्ता पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाफरिकः । मार्गिकः । सौकरिकः । 'अण्डजानिमिषादेर्गुणार्थत्वेनासंज्ञात्वान्न' इति नाथः ॥

## परिपन्थं च तिष्ठति (४. ४. ३६)

परिपथपर्यायः परिपन्थशब्दोऽस्ति । तस्मात् तिष्ठति हन्तीति चार्थे ठक् । प्राग्वत् परिद्व्यर्थः ।

१. 'शांनि शा' अ, ए, ऽ, पाठः. २. 'गर्ह्', ३. 'दार्द', ४. 'दर्द' ग. प. क. ए. पाठः. ५. 'हरिः' ए. पाठः.

तद्धर्म्यं प्राजापत्यम्। याजमानम्। नारम्। आनुचारकम्। पौरोहितम्। हौत्रम्। माणिपालम्। 'व्यनुप्रेभ्यो लेपिकायाः' (भो० ४.४.१०६)। वैलेपिकम्। आनुलेपिकम्। प्रालेपिकम्॥

ऋतोऽञ् (४.४.४९)

पोतुर्धर्म्यं पौत्रम्। औद्गात्रम्। 'विशसितुरिटो लोपश्च' (वा०)। वैशस्त्रम्। 'विभाजयितुर्णिलोपश्च'(वा०)। वैभाजित्रम्॥

अवक्रयः (४.४.५०)

शुल्कशालादिके दातुं नियतोऽशो ह्यवक्रयः।
तस्यावक्रय इत्यर्थे ठग् भवेत् शौल्कशालिकः॥

तदस्य पण्यम् (४.४.५१)

पण्यं विक्रेतव्यम्। अपूपाः पण्यमस्येत्यापूपिको वणिक्॥

लवणाट्ठञ् (४.४.५२)

ठक् च स्यात्। लवणपण्यवान् लावणिकः॥

किशरादिभ्यः ष्ठन् (४.४.५३)

षिदयम्। 'किशरतगरोशीरहरिद्राहरिद्रुगुग्गुलुस्थगलनलदपर्णिभ्यः' (भो० ४-४-११०)। गन्धद्रव्यार्था एते। किशरपण्यवान् किशरिकः। तगरिकः। इत्यादि। नलदमुशीरमूलम्॥

शलालुनोऽन्यतरस्याम् (४.४.५४)

अस्मात् गन्धार्थाद् वा ष्ठन्। शलालुकः। शालालुकः॥

शिल्पम् (४.४.५५)

तदस्य शिल्पमित्यर्थे ठक् स्यान्मालिकवैणिकौ।
निर्माणवादनाद्यर्थवृत्तिः शब्द इहेष्यते॥

---

१. 'तृधर्म्यं'. २. 'तुर्निय' M. U. S. पाठः. ३. 'द्रागु' S K. पाठः. ४. 'र्णिभ्यः' M. U. S. पाठः, 'र्णेभ्यः' S. K. पाठः.

कम्बोर्विकार ओरञि वेणोर्बिल्वाद्याणि स्थितेऽथ ठकि ।
काम्बविको वैणविकः स्यात् काम्बुकवैणुकौ च शुद्धाभ्याम् ॥

मड्डुकझर्झरादणन्यतरस्याम् (४. ४. ५६)

मड्डुकवादनं शिल्पमस्य माड्डुकः । ठकि माड्डुकिकः । झार्झरः । झार्झरिकः ॥

प्रहरणम् (४. ४. ५७)

तदस्यायुधमित्यर्थे ठक् स्यात्प्राक्रिक आसिकः ।

परश्वधाट्ठञ्च (४. ४. ५८)

अस्मात् तु ठक्ठञौ पारश्वधिकोऽत्र स्वरे भिदा ॥
*'अण् चैके' इति भोजोक्त्या पारश्वधः ॥

शक्तियष्ट्योरीकक् (४. ४. ५९)

शाक्तीकः । याष्टीकः ॥

अस्तिनास्तिदिष्टं मतिः (४. ४. ६०)

एष्वस्तथामतिरस्यास्तीत्यर्थे ठक् । परलोकोऽस्तीति मतिरस्येत्यास्तिकः । स नास्तीति मतिरस्येति नास्तिकः । दैवं शरणमिति मतिरस्य दैष्टिकः ॥

शीलम् (४. ४. ६१)

तदस्य शीलमित्यर्थे ठक् । अपूपभक्षणं शीलमस्य आपूपिकः । क्रियात्रान्तर्भूता ॥

छत्रादिभ्यो णः (४. ४. ६२)

[1] छत्रसत्यानृतविशिखाभ्यः ।

---

२ इदं च सूत्रं मुद्रितसरस्वतीकण्ठाभरणे न दृश्यते । मुद्रितमद्पुरीयसरस्वतीकण्ठाभरणसूत्रपाठे 'परश्वधाट्ठञ्च' (४-४-११५) इत्यनन्तरम् 'अण् चैके' इति सूत्रं पाठभेदेन निर्दिष्टम् ।

१. 'छत्रसत्यानृतविशिखाभ्यो गृहस्थदनादिशुरिभ्यो णः' (४-४-११६) इति मुद्रितसरस्वतीकण्ठाभरणपाठः.

छत्रेण तद्वारणादिर्गुरुसेवात्र लक्ष्यते ।
सर्वसहत्वाद् रथ्याया विशिखेति क्षमोच्यते ॥

तस्माद् गुरूपासनशीलश्छात्रः । क्षमाशीलो वैशिखः । सात्यः । आनृतः । 'अङः स्थः' (सं० ४-४-१२०) । 'आतश्चोपसर्गे' (३-३-१०६) इत्यङन्तात् स्थाशब्दाण्णः । आस्थाशीलः, आस्थः । प्रातिष्ठः । 'शिक्षाभिक्षाभक्षाचुरातपःकर्षकृष्युपस्थानप्ररोहादिभ्यः' (सं० ४-४-१२१) । शिक्षाशील: शैक्षः । भैक्षः । भाक्षः । चौरः । तापसः । कार्षः । कार्षः । औपस्थानः । प्रारोहः । 'छत्रादिणस्याण्कार्यमिष्यते' । तेन ङीप् । छात्री । तापसी । कार्ष इत्यत्र त्वण्कार्येण 'अन्' (६-४-१६७) इति प्रकृतिभावे प्राप्ते 'कार्मस्ताच्छील्ये' (६-४-१७२) इति निपातनाट्टिलोपः ॥

कर्माध्ययने वृत्तम् (४. ४. ६३)

तत्कर्माध्ययने वृत्तमस्येत्यर्थे तु ठग् भवेत् ।
वेदाधीतिपरीक्षायां भ्रंशसंख्यास्वयं विधिः ॥
द्वे अन्यकर्मणी जाते यस्य ह्यध्ययने वटोः ।
सोऽयं द्विरन्यथावादकर्ता द्वैयन्यिको वटुः ॥

बह्वच्पूर्वपदाट्ठच् (४. ४. ६४)

चतुर्दशान्यिकः ॥

हितं भक्षाः (४. ४. ६५)

तदस्मै हितमित्यर्थे भक्षेभ्यष्ठक् । साक्तुकः ॥

तदस्मै दीयते नियुक्तम् (४. ४. ६६)

तदस्मै निश्चयेन नित्यं वा दीयत इत्यर्थे ठक् । अग्रभोजनमस्मा एव देयमित्याग्रभोजनिको विद्वान् । क्षीरमस्मै नित्यं दीयत इति क्षैरिकः ॥

---

१. 'गुरु' अ. प. ऊ. पाठः. २. 'प्ररोहविश्वधादिभ्यः' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. ३. 'भक्ष्येभ्य' अ. प. ऊ. पाठः.

श्राणामांसौदनाट्टिठन् (४. ४. ६७)

टो ङीबर्थः। इकार उक्तयर्थः। श्राणास्मै नियतं दीयत इति श्राणिकः। मांसौदनिकः। व्यस्ताच्च। मांसिकः। ओदनिकः॥

भक्तादणन्यतरस्याम् (४. ४. ६८)

भक्तमस्मै नियतं दीयत इति भाक्तः। ठकि भाक्तिकः॥

तत्र नियुक्तः (४. ४. ६९)

अत्र ठक्। द्वारे नियुक्तो दौवारिकः॥

अगारान्ताट्ठन् (४. ४. ७०)

देवागारे नियुक्तो देवागारिकः॥

अध्यायिन्यदेशकालात् (४. ४. ७१)

निषिद्धदेशकालेऽध्यस्तत्राध्यायीत्यर्थे ठक्। चतुष्पथेऽधीत इति चातुष्पथिकः। आष्टमिकः॥

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति (४. ४. ७२)

कठिनान्ताद् वंशकठिनाख्यदेशे व्याप्रियमाणो वांशकठिनिकः। व्रीह्यादेः प्रस्तारणे[1] व्यापृतः प्रास्तारिकः। प्रतिमादेः संस्थानशिक्षापरः सांस्थानिकः॥

निकटे वसति (४. ४. ७३)

ग्रामाद् क्रोशे निवस्तव्यं भिक्षुणेति विधीयते।
तादृङ्निकटवासेऽयं विधिर्नैकटिको यतिः॥

'निकटश्मशानवृक्षमूलेषु वसति'(सू०४-४-१३२) इति भोजः। तद्वृत्तौ निकटवास्येव नैकटिकः। एवं श्माशानिकः। वार्क्षमूलिकः॥

आवसथात् ष्ठल् (४. ४. ७४)

षिदयम्। गृहे वसत्यावसथिकः॥

॥ इति ठगागः॥

---

१. 'प्रस्तारेण व्यापृत' ख. ग. पाठः

प्राग्घिताद्यत् (४. ४. ७५)

'तस्मै हितम्' (५-१-५) इत्यतः प्राग् यद्विधिः । इह च तत्र साधुरित्येवार्थो बहुविषयः ॥

तद्वहति रथयुगप्रासङ्गम् (४. ४. ७६)

एभ्यस्तद्वहतीत्यर्थे यत् स्यात् । रथं वहन् रथ्यः । युग्यः प्रासङ्ग्यः । वत्सानां दमनकाले स्कन्धासक्तं युगसदृशं काष्ठमत्र प्रासङ्ग इति हरः । बहुवाह्ये शकटादौ युगाद् युगः प्रासङ्ग इत्यन्ये ॥

धुरो यड्ढकञौ (४. ४. ७७)

धुर् य, रान्तत्वात् 'हलि च' (८-२-७७) इत्युपधादीर्घे प्राप्ते ॥

न भकुर्छुराम् (८. २. ७९)

अत्र छकारमेव हराद्याः पेठुः । रान्तस्य वान्तस्य च भस्य कुर् छुर् इत्यनयोश्चोपधादीर्घो न स्यात् । धुरं वहन् धुर्यः । धौरेयकः । 'यड्ढञौ' इति पाठे धौरेयः ॥

खः सर्वधुरात् (४. ४. ७८)

सर्वधुरां वहन् सर्वधुरीणः । ख इति विभागाद् धुर एव खः धुरीणः । उत्तरधुरीणः ॥

एकधुराल्लुक् च (४. ४. ७९)

अस्मात् खो लुक् च । एकधुरीणः । एकधुरः ॥

शकटादण् (४. ४. ८०)

---

१. 'युगं' क ग. घ. छ. ज. M I., 8. पाठः. २. 'यड्ढका' इति मुद्रितकाशिकावृत्तिप्रक्रियाकौमुदीसिद्धान्तकौमुदीषु पाठः । अस्मदयसंगृहीततालपत्रात्मकेषु यथाक्रमं ५०७, ९९, ६९५ तमाङ्कतया दृश्यमानेषु ग्रन्थेषु, तथा ९४२ तमाङ्कतालपत्रात्मकाष्टाध्याय्यामपि यड्ढञावित्येव दृश्यते । ३. 'भकुर्च्छुराम्' इति ९९ तमाङ्कप्रक्रियाकौमुद्यां पठ्यते । ४. 'यड्ढञौ' इति मुद्रितसार्थाष्टाध्याय्यां २७७४ तमाङ्कतालपत्रात्मकाष्टाध्याय्यां च दृश्यते । ५. 'धुरं' M. I. 1. पाठः.

शकटं वहन् शाकटः ॥

## हलसीराट्ठक् (४. ४. ८१)

हलं वहन् हालिकः । सैरिकः । एषु तदन्तविधिरिति रामः । द्वैशकटः । द्वैहलिकः । द्वैसीरिकः । प्राग्दीव्यतीयत्वाभावात् न द्विगोर्लुक् ॥

## संज्ञायां जन्याः[1] (४. ४. ८२)

जनीशब्दाद् वहत्यर्थे नाम्नि यत् स्याज्जनी वधूः ।
जन्यस्तच्छिबिकाधारी तां पतिं प्रापयन्नपि ॥
तेन जन्यो वरसुहृज्जन्या चैवं वधूसखी ।

## विध्यत्यधनुषा (४. ४. ८३)

यत् स्यात् तद् विध्यतीत्यर्थे धनुस्तत्करणं न चेत् ।

ऊरू विध्यन्तीत्यूरव्याः कण्टकाः । पद्याः शर्कराः । 'पद्यति—' (६-३-५३) इति पद्भावः । अधनुषेत्युक्तेर्धनुरायायुधैर्वेधे चोरं विध्यन् चौर्य इति न स्यात् ॥

## धनगणं लब्धा (४. ४. ८४)

आभ्यां तल्लब्धेत्यर्थे यत् । धनं लब्धा धन्यः । गण्यः ॥

## अन्नाण्णः (४. ४. ८५)

अन्नं लब्धा आन्नः ॥

## वशं गतः (४. ४. ८६)

वशं गतो वश्यः ॥

## पदमस्मिन् दृश्यम् (४. ४. ८७)

पदमस्मिन् द्रष्टुं शक्यमिति पद्यः कर्दमः ॥

---

१. 'जन्या' इति मुद्रितसिद्धान्तकौमुदीपाठः, १८४१ तमाङ्कतालपत्रात्मककोशस्थायां जन्याः इत्येव दृश्यते ।

### मूलमस्याबर्हि (४. ४. ८८)

आबर्हीत्यवग्रयोरपाटनीयम् ।

मूलमस्य समुत्पाट्यास्मिति मूल्यस्तिलोत्करः ।
आमूलं शुष्कफलभृद् दुर्ग्रहो लवने त्वसौ ॥

'मूलमस्याद्दढम्' (स० ४-४-१४८) इत्येवाह भोजः ॥

### संज्ञायां धेनुष्या (४. ४. ८९)

ऋणप्रत्यर्पणान्तमुत्तमर्णस्य दोहायार्पिता धेनुर्धेनुष्या ॥

### गृहपतिना संयुक्ते ञ्यः (४. ४. ९०)

नाम्न्येव । गृहस्थेन प्रथमसंयुक्तत्वाद् गार्हपत्यः पश्चिमाग्निः । स ह्यन्याग्न्योः प्रकृतिः ॥

### नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु (४. ४. ९१)

नावादिभ्यः क्रमात् तार्यादिष्वर्थेषु यत् । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यं फलम् । विषेण वध्यो विष्यः । मूलद्रव्येणानाम्यसाधार्यं मूल्यं, लाभद्रव्यमित्यर्थः ।

अंशभूतं किलानाम्यमिति वृत्तावुदीरितम् ।
मूलद्रव्याङ्गभूतत्वाल्लाभस्यात्रापि मूल्यता ॥

मूलशब्दस्य समार्थयोगाय पुनः पाठः । लाभरहितत्वान्मूलेन समो मूल्यः पटः ।

मूल्यशब्दः क्रयधने द्वेधाप्येवं न सिध्यति ।
विक्रेतुर्लाभहेतुत्वाल्लक्षणेति हरोऽब्रवीत् ॥

सीता हलाग्रं तेन समितं समीकृतं क्षेत्रं सीत्यमिति हरः । 'रथसीतहलेभ्यः' (वा० १-१-७२) इति तदन्तविधिना द्विसीत्यं, त्रिसीत्यम् ।

---

१. 'ञ्यः गृहस्थेन' ख. पाठः. २. 'नाम्न्येव । गृहस्थेन प्रथमं संयुक्ते ञ्यः । गृहस्थेन' ग. घ. पाठः. ३. 'अंशभूतं' क. ग. ङ. पाठः.

तुल्या समानस्तुल्यः । गवयस्य तुलावत् स्वरूपपरिच्छेदकत्वात् गवयेन तुल्या गौः ॥

### धर्मपथ्यर्थन्यायादनपेते (४. ४. ९२)

धर्मादनपेतं धर्म्यं चेष्टितम् । वैद्योक्तात् पथोऽनपेतं पथ्यम् । अर्थ्यम् । न्याय्यम् ॥

### छन्दसो निर्मिते (४. ४. ९३)

इच्छार्थाच्छन्दसो निर्मिते यत् । इच्छया कृतं छन्दस्यम् ॥

### उरसोऽण् च (४. ४. ९४)

आत्मार्थादुरसो निर्मितेऽण् यच्च । औरस उरस्यो वा पुत्रः ॥

### हृदयस्य प्रियः (४. ४. ९५)

अत्रार्थे यत् ॥

### हृदयस्य हृल्लेखयदण्लासेषु (६. ३. ५०)

लेखशब्दे यदणोर्लासे च परे हृदयस्य हृदादेशः स्यात् । हृदयस्य प्रियं हृद्यम् ॥

### बन्धने चर्षौ (४. ४. ९६)

बन्धनं वशीकरणसाधनम्, ऋषिर्मन्त्रः, तस्मिन् वाच्ये हृदयाद् यत् । हृदयस्य बन्धनो मन्त्रो हृद्यः ॥

### मतजनहलात् करणजल्पकर्षेषु (४. ४. ९७)

क्रमाद्यत् । मतं ज्ञानं, तस्योत्पादनं तत्साधनं वा मत्यम् । जनस्य जल्पो जन्यः[1] । हलस्य कर्षो हल्यः । स च कर्षणं कृष्यमाणदेशो वा । तत्र त्रिलिङ्गम् । 'रथसीता—' (वा०१-१-७२) इति तदन्तविधेर्द्विहल्यः । परमहल्यः ॥

### तत्र साधुः (४. ४. ९८)

१. 'तुल्यो' क. ग. ङ. छ. ज. M. P. S. पाठः. २. 'एत् स्यात्' क. M. U. S. पाठः.

अत्रार्थे यत् स्यात् । साधुः प्रवीणो योग्यो वा । सामसु साधुः सामन्यः । कर्मण्यः । नान्तत्वेऽपि 'ये चाभावकर्मणोः' (६-४-१६८) इति टिलोपाभावः ॥

## प्रतिजनादिभ्यः खञ् (४. ४. ९९)

'प्रतिपञ्चमहासर्वविश्वेभ्यो जनात्' (स० ४-४-१६८) । प्रतिजनं साधुः प्रातिजनीनः । पञ्चजना नराः । तेषु साधुः पाञ्चजनीनः । माहाजनीनः । सार्वजनीनः । वैश्वजनीनः । 'समिदंसमपरेभ्यो युगात्' (स० ४-४-१६९) । सांयुगीनः । ऐदंयुगीनः । समः सर्वार्थः । सामयुगीनः ।'तद्धिते पूर्वपदस्थनिमित्तादपि णत्वं वाच्यम्, पारयुगीणः । 'परस्यामुष्यास्यपरेभ्यः कुलात्' । पारस्यकुलीनः । आमुष्यकुलीनः । आस्यकुलीनः । एषु निपातनादलुक् । पारकुलीनः ॥

## भक्ताण्णः (४. ४. १००)

भक्ते योग्या भाक्तास्तण्डुलाः ॥

## परिषदो ण्यः (४. ४. १०१)

पारिषद्यो वाग्मी । परिषद इति विभागाणश्च । पारिषदा वाक् । एकदेशविकृतत्त्वात् पार्षद्यः । पार्षदः ॥

## कथादिभ्यष्ठक् (४. ४. १०२)

कथायां निपुणः काथिकः । 'विविश्वपूर्वायाश्च' (स०४-४-१७४) विकथायां साधुर्वैकथिकः । वैश्वकथिकः । 'जनेजनाभ्यां वादात्' (स० ४-४-१७१) । जानेवादिकः । जानवादिकः । 'वृत्तिसंग्रहगणगुणायुर्वेदवितण्डाभ्यश्च' (स० ४-४-१७६) । वार्त्तिकः । सांग्रहिकः । गाणिकः । गौणिकः । आयुर्वैदिकः । वैतण्डिकः । विहासे साधुर्वैहासिको विदूषक इति च सुरारिपञ्चिका ॥

## गुडादिभ्यष्ठञ् (४. ४.१०३)

---

१. 'यत् ।' प्र. U. 8. पाठः. २. परस्यामुष्यपरेभ्यः कुलात् (४-४-१८०) इति मुद्रितसरस्वतीकण्ठाभरणपाठः । ३. 'विभागात् पारिषदा' प्र. U. 8. पाठः.

'गुडापूपसक्तुमांसौदनकुल्मापवेणुभ्यः' (स० ४-४-१७७) । गुडे साधुर्गौडिक इक्षुः । आपूपिकः । साक्तुकः । मांसौदनिकी पुलिन्दी । कौल्माषिको मुद्गः । 'समो बाहघातग्रामेभ्यः' (स० ४-४-१७८) । सांबाहिकः । साङ्घातिकः । साङ्ग्रामिकः । 'प्रन्युपेभ्यो वासात्' (स० ४-४-१८९) । प्रावासिकः । नैवासिकः । औपवासिकः ॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् (४. ४. १०४)

पाथेयम् । आतिथेयम् । वसतौ योग्या वासतेयी रात्रिः । शाला वा । स्वशब्दस्य द्वारादित्वात् प्राप्त ऐच् स्वागतादित्वान्न । स्वपतिर्धनिकः, तत्र योग्यं स्वापतेयं धनम् ॥

## सभाया यः (४. ४. १०५)

सभ्यः ॥

## समानतीर्थे वासी (४. ४. १०७)

अत्रार्थे यत् ॥

## तीर्थे ये (६. ३. ८७)

यप्रत्ययान्ते तीर्थे परे समानस्य सः स्यात् । समानगुरौ वासी सतीर्थ्यः ॥

## समानोदरे शयित ओ चोदात्तः (४. ४. १०८)

अस्मिन्नर्थे यद् ओकारस्योदात्तत्वं च । समानोदर्यः ॥

## सोदराद्यः (४. ४. १०९)

सोदर्यः । अनयोः 'विभाषोदरे' (६-३-८८) इति समानस्य यप्रत्यये वा सभावः । 'भवे छन्दसि' (४-४-११०) इत्यधिकारेऽपि केचिल्लोके दृष्टाः ॥

१. 'सांहिघातग्रामेभ्यः' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. २. 'न्यधिकारे केचिल्लोके' क. ख. ग. पाठः. ३. 'दृष्टाः नगरभंगरूपसमुताराः । एभ्यस्तत्र' ख. ग. ङ. पाठः.

## सगर्भसयूथसनुताद् यैः (४. ४. ११४)

एभ्यस्तत्रभवे यैः स्यात् । सगर्थ्यः । सयूथ्यः । सनुत्यस्तु लोके न दृष्टः ॥

## अग्राद् यत् (४. ४. ११६)

अग्रे भवोऽग्र्यः ॥

## घच्छौ च (४. ४. ११७)

घचि अग्रियः । छे अग्रीयः ॥

## समुद्राभ्राद् घः (४. ४. ११८)

भवेऽर्थे[3] । समुद्रियम्, अभ्रियम् ॥

## मत्वर्थे मासतन्वोः (४. ४. १२८)

अनयोर्वाच्ययोर्मत्वर्थे यत् । तत्र तनौ लोके न दृष्टः । मासे तु नभांसि मेघाः, तद्वान्मासो नभस्यः । एवं हेमन्ते बलवृद्धिमत्त्वात् सहस्यो मासः । तपनं तपः, शिशिरेऽग्न्यादितपनवत्त्वात् तपस्यः । 'लुगकारेकाररेफाश्च वाच्याः' (वा० ४-४-१२८) । तस्य यत एव वा लुक् । नभाः सहास्तपाश्च मासः । अकारः, इडन्नम्, ऊर्ग् बलं, तद्वान् इषः, ऊर्जः । शरदः पुष्टिकालत्वात् तथोक्तिः । इकाररेफौ, वर्षेण शुगत्रास्तीति शुचिः शुक्रः । 'स्वादिषु—' (१-४-१७) इति पदत्वात् कुत्वम् । 'अयस्मयादीनि च्छन्दसि' (१-४-२०) इति भत्वस्यापि भावाज्जश्त्वाभावः ॥

## मधोर्ञ च (४. ४. १२९)

मधोस्तद्वति मासे वाच्ये ञो यच्च स्यात् । मध्वत्रास्तीति माधवः । यतस्तु वक्तव्येन लुक् । मधुः (मधव्यः) ॥

---

१, २. 'यत्' ट, 'नभ्' मुद्रितग्रन्थादिपाठः. ३. 'भवार्थे' घ, पाठः.
४, 'ष्टम् ।' ग घ, ञ, ट, ०, पाठः.

शिवशमरिष्टस्य करे (४. ४. १४३)

एभ्यः करेऽर्थे तातिल् । शिवकरः, शिवतातिः । शन्तातिः । अरिष्टतातिः क्षेमकृत् ॥

भावे च (४. ४. १४४)

शिवत्वमेव शिवतातिरित्यादि ॥

इति यद्भागः ॥

---

प्राक् क्रीताच्छः (५. १. १)

तेन क्रीतमित्यतः प्राक् चतुर्ष्वर्थेषु च्छोऽधिकृतः ॥

तस्मै हितम् (५. १. ५)

अस्मिन्नर्थे छः । वत्सेभ्यो हितो वत्सीयः । 'नञ्स्नञौ भवनात् (४-१-८७)' इति स्त्रियै हितं स्त्रैणम् । पौंस्नम् । *'वृषन् ब्राह्मणराजाचार्येभ्यो हितप्रत्ययो नेष्टः' ॥

शरीरावयवाद् यत् (५. १. ६)

चक्षुष्यमञ्जनम् ॥

खलयवमाषतिलवृषब्रह्मणश्च (५. १. ७)

खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृषाय हितं वृष्यम् । ब्रह्मण्यम् । चकाराद् रथाय हिता रथ्या विस्तीर्णपद्धतिः । प्राक्क्रीतीयेषु तदन्तविधेरिष्टत्वात् कृष्णतिल्यमित्यादि ॥

अजाविभ्यां थ्यन् (५. १. ८)

अजाय हितं अजथ्यम् । अविथ्यम् । थ्यनि पुंवत्त्वमिष्टम् । अजायै हितमप्यजथ्यम् ॥

---

१. 'स्त्रीहितं' M. U. S पाठः.

* 'न राजाचार्यवृषनब्राह्मणेभ्यः' (५. ४. ११९) इति सरस्वतीकण्ठाभरणसूत्रपाठः.

## आत्मन्विश्वजनभोगोत्तरपदात् खः (५. १. ९)

आत्मने हितमात्मनीनम् ॥

## आत्माध्वानौ खे (६. ४. १६९)

एतौ खे परे प्रकृत्या स्तः । इति नान्तोक्तटिलोपाभावः । विश्वजनीनः । 'पञ्चजनाचेष्टम्' (वा० ५-१-९) । पञ्चजनीनः । 'सर्वजनाट्ठञ् खश्च' (वा० ५-१-९) सार्वजनिकः सर्वजनीनः । 'महाजनाट्ठञ्' (वा०५-१-९) माहाजनिकः । 'विश्वजनादिभ्यः कर्मधारयेऽस्य एवेष्यते' । भोगोत्तरपदात्तु राजभोगीनः । तद्धिते पूर्वपदस्थ-दपीति णत्वे पितृभोगीणः । 'आचार्यादणत्वं च ।' (ग०) आचार्यभोगीनः । एषु भोगः शरीरम् । राज्ञे हितमित्यादिरेवार्थ इष्टः ॥

## सर्वपुरुषाभ्यां णढञौ (५. १. १०)

सर्वस्मै हितः सार्वः । अस्माच्छोऽपि । सर्वीयः । 'पुरुषाद्धितवधविकारावयवसमूहतेनकृतेषु ढञ् वाच्यः' (वा० ५-१-१०) ॥

'नो पौरुषेयमयमिच्छति पौरुषेये
सक्तो वधे पिशितमत्ति च पौरुषेयम् ।
द्राक् पौरुषेयगलभिन्न च पौरुषेयै-
र्जघ्यौ विनिन्दति च वाचमपौरुषेयीम् ॥

## माणवचरकाभ्यां खञ् (५. १. ११)

माणवेभ्यो हितं माणवीनम् । चारकीणम् । चरका भिषजः ॥

## तदर्थं विकृतेः प्रकृतौ (५. १. १२)

विकृतिवाचिभ्यस्तदर्था प्रकृतिरित्यर्थे छः । अङ्गारायैव प्रकृतित्वेन कृतमङ्गारीयं काष्ठम् ॥

## छदिरुपधिबलेर्ढञ् (५. १. १३)

एभ्यः प्रकृतौ ढञ् ।

---

१. 'पञ्चजनादुपसंख्यानम्' इति मुद्रितपाठः [illegible]। २. 'पुरुषाद्धित-विकारसमूहतेनकृते' [illegible] पाठः। ३. 'जघ्यौ' क. ख. ग. पाठ

छादिषेयस्तृणौघोऽयं बालेयास्तण्डुला इमे ।
उपधिश्चौपधेयं च रथाङ्गं स्वार्थिकोऽस्य ढञ् ॥

*ऋषभोपानहोर्ञ्यः (५. १. १४)

ऋषभार्थं प्रकृतिभूत आर्षभ्यो वत्सः । औपानह्यं चर्म ॥

चर्मणोऽञ् (५. १. १५)

चर्मविकारेभ्यः प्रकृतावञ् । वरत्रा प्रकृतिः वारत्रं चर्म ॥

तदस्य तदस्मिन् स्यादिति (५. १. १६)

तदस्य स्यात् तदस्मिन् स्यादिति चार्थे छः । प्राकारोऽस्य स्यादिति प्राकारीयः शिलौघः । इयता प्राकारो निर्वर्त्यतेत्यर्थः । एवं प्राकारीयं पुरम् । सोऽस्य संभवेदित्यर्थः । निधिरस्मिन् स्यादिति निधीयो देशः ॥

परिखाया ढञ् (५. १. १७)

परिखा अस्य सम्भवेदिति पारिखेयं पुरम् ॥

उगवादिभ्यो यत् (५. १. २)

एषु चतुर्ष्वर्थेषु उवर्णान्ताद् गवादिभ्यश्च यत् स्यात् । पशुभ्यो हितं पशव्यम् । शङ्क्वर्थं दारु शङ्कव्यम् । 'गोहविर्वर्हिरिष्टकामेधास्रुग्युगस्खदाक्षरासुरखरदरविषाध्यकूपेभ्यः'(स० ४. ४. १८३) । गवे हितं गव्यम् । हविष्यम् । बर्हिष्यम् । इष्टकया मृत् । मेध्यम् । स्रुच्यम् । युग्यम् । स्खद्यम् । अक्षर्यम् । असुर्यम् । खर्यम् । दर्यम् । विष्यम् । अध्वन्यम् । 'ये चाभाव—' (६-४-१६८) इति प्रकृतिभावः । कूप्यम् । तदन्तविधिना सुगव्यमित्यादि । 'नाभेर्नभश्चादेहांशात्'(स० ४-४-१८४) । रथादेरक्षप्रवेशरन्ध्रं नाभिः । तस्मै हितो नभ्योऽक्षः । देहांशात् तु शरीरावयवाद् यति नाभ्यं तैलम् । 'ऊधसोऽनङ् च' (ग०) । ऊधन्यम् । §'शुनः सम्प्रसारणं दीर्घश्च वा' (ग०)। शुने हितं शुन्यम् । निर्जनदेशस्य श्वप्रियत्वाच्छून्यम् ॥

---

१. 'उपधिश्चौपधेयश्च' M. U. S. पाठः २. 'स्यादिति तद्', ३. 'निर्वर्त्यत इत्यर्थः' क. पाठः ४. 'इष्टका', ५. 'न्यः' M. U. S. पाठः

---

* 'ऋषभोपानहो ञ्यः' इति मुद्रितवास्मनोरमापाठः

§ 'शुनः सम्प्रसारणं वा च दीर्घत्वम्' इति मुद्रितपाठः।

## कम्बलाच्च संज्ञायाम् (५. १. ३)

कम्बलार्थत्वात् कम्बल्यमित्यूर्णाशतस्याख्या ॥

## विभाषा हविरपूपादिभ्यः (५. १. ४)

हविर्विशेषेभ्योऽपूपादिभ्यश्च हितादौ वा यत् । पुरोडाशार्थास्तण्डुलाः पुरोडाश्याः । पुरोडाशीयाः । अपूपयूपदीपाश्वपत्रस्थूणार्गलमुसलकटककर्णवेष्टकसूपौदनपृथुकाभ्यूपावोपतण्डुलकिण्वेभ्यः(स० ४ ४-१८९) अपूप्यम् । यूप्यं दारु । दीप्यम् । अश्व्यम् । पत्र्यम् । स्थूण्यम् । अर्गल्यम् । मुसल्यम् । कटक्यम् । कर्णवेष्टक्यं च हैम । सूपादयोऽन्नभेदाः । सूप्यम् । ओदन्यम् । पृथुक्यम् । अभ्यूष्यम् । अवोष्यम् । तण्डुल्यम् । किण्व्यम् । विकल्पाच्छः । अपूपीयं यूपीयमित्यादि । तदन्तविधिना प्रदीप्यादि च । अन्नविशेषेभ्यश्च । पिष्ट्यः पिष्टीयो वा तण्डुलः । अन्नविशेषाणामेषां तदन्तविधिर्नास्ति । पठितानां त्वपूपादीनामस्तीति भेदः । गुलापूप्यं क्षीरौदन्यमित्यादि ॥

इति छभागः ।

## प्राग्वतेष्ठञ् (५. १. १८)

ये तेन क्रीतमित्याद्या अर्था वतिविधेः पुरा ।
ठञाधिकिमते तेषु ठगादिरहिते स्थले ॥

सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ॥

## आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् (५. १. १९)

तदर्हतीत्यतस्तदन्तं ठगेवाधिकृतो भवेत् ।
गोपुच्छादेस्तु ठञ्नेति तेषु ठञ् परिशिष्यते ॥

मुद्रैः क्रीतं मौद्रिकम् । गोपुच्छादेस्तु ठञ् । गौपुच्छिकम् साप्ततिकम् । प्रास्थिकम् । स्वर एव भेदः ॥

---

१. 'विकारान्नविकारेभ्यश्च' इति मुद्रितसरस्वतीकण्ठाभरणपाठः २. 'सूपौदनयोर्न भेदः' अ. ए. ८. पाठः ३. 'अर्गल्यम्' इति मुद्रितसरस्वतीकण्ठाभरणपाठः ४. इदमूनं पाठेऽत्र [illegible] मुद्रितसरस्वतीकण्ठाभरणपाठे. ५. 'पिष्ट्यः पिष्टीयो', ६. [illegible] अ. ए. ड. पाठः. ७. 'क्षारोदन्यम्' अ. ए. ड. पाठः.

## असमासे निष्कादिभ्यः (५. १. २०)

एभ्योऽसमास एव ठक् । 'निष्कपणपादमाषवाहद्रोणषष्टिभ्यः' (ग० ५-१-४) । निष्काद्यः परिमाणभेदा वक्ष्यन्ते । नैष्किकं, पाणिकमित्यादि । समासे तु ठञ् ॥

## परिमाणान्तस्यासंज्ञाशाणयोः (७. ३. १७)

परिमाणान्तस्याङ्गस्य वृद्धिकृत्तद्धिते परे उत्तरपदवृद्धिः स्यात् । संज्ञायां शाणस्य च न । उत्तमनैष्किकम् ॥

## शताच्च ठन्यतावशते (५. १. २१)

आर्हीयेष्वसमस्ताच्छतशब्दादशते वाच्ये ठन्यतौ स्तः । शतेन क्रीतादि शतिकं, शत्यम् । यत्र तु 'तदस्य परिमाणमि'त्यर्थे शतकं स्तोत्रमित्यादि शतात्मकमेव वस्तु वाच्यं, तत्रोत्तरसूत्रतः कनेव । तथा समासेऽपि कन् । पणशतेन क्रीतं पणशतकम् ॥

आपिशलिकाशकृत्स्नैरग्रन्थे ठन्यताविति स्मरणात् ।
शत्यः शतिको गोगण इति सिध्येदित्यनिच्छयाह हरः ॥

## संख्याया अतिशदन्तायाः कन् (५. १. २२)

त्यन्तशदन्तवर्जितायाः सङ्ख्याया आर्हीत् कन् स्यात् । पञ्चभिः क्रीतः पञ्चकः । 'बहुगणवतुडति सङ्ख्या' । बहुभिः क्रीतो बहुकः । गणकः । डत्यन्तात् कतिकः ॥

अर्धपूर्वः पूरणान्तः सङ्ख्याख्यः कन्समासयोः ।
पणैरर्धचतुर्थैर्हि क्रीतमर्धचतुर्थकम् ॥
अर्धं चतुर्थमेषामित्यर्धचतुर्थाः सार्धास्त्रयः ॥

## वतोरिड्वा (५. १. २३)

वत्वन्तात् तु कन इड् वा स्यात् । तावद्भिः क्रीतस्तावतिकः । तावत्कः ॥

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् (५. १. २४)

आभ्यामनाम्नि ड्वुन् ॥

---

१. 'पाणि' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. २. 'असमस्ता', ३. 'बहुगणवतु' इति सङ्ख्या' M. U. S. पाठः.

ति विंशतेर्डिति (६. ४. १४२)

भस्य विंशतेर्डिति परे तिलोपः स्यात्। विंश अक, 'अतो गुणे (६-१-९७)। विंशकः। त्रिंशतष्टिलोपः। त्रिंशकः। संज्ञायां तु विंशतिकः। त्रिंशत्कः। अत्र विंशतित्रिंशद्भ्यामिति विभागात् कन्॥

कंसाट्टिठन् (५. १. २५)

कंसपरिमितेन क्रीतं कंसिकम्। टित्वात् कंसिकी। 'अर्धाच्च वाच्यम्' (वा० ५-१-२५) अर्धिकम्। अर्धं रूपार्धम्। 'कार्षापणाट्टिठन् प्रतिशब्दश्चास्यादेशो वा वाच्यः' (वा० ५-१-२५)। कार्षापणेन क्रीतं कार्षापणिकम्। प्रतिकम्॥

शूर्पादञन्यतरस्याम् (५. १. २६)

द्विद्रोणः शूर्पः। तेन क्रीतादि शौर्पम्। परिमाणत्वाट्ठञि शौर्पिकम्॥

शतमानविंशतिकसहस्रवसनादण् (५. १. २७)

शातमानम्। वैंशतिकम्। साहस्रम् वासनम्॥

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् (५. १.२८)

अध्यर्धपूर्वाच्छब्दाद् द्विगोश्च परस्यार्हीयस्यानाम्नि लुक्। अध्यर्धशूर्पेण क्रीतमध्यर्धशूर्पम्। द्विगोः— द्विशूर्पं त्रिशूर्पम्। अर्धचतुर्थादेः समासे सङ्ख्यात्वात् तेषां शूर्पादिभिर्द्विगौ कृते लुक्। अर्धचतुर्थैः शूर्पैः क्रीतः अर्धचतुर्थशूर्पः। पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः पटः॥

इद्गोण्याः (१. २. ५०)

तद्धितलुकि सति गोण्या इत् स्यात्। इदिति विभागादन्यस्यापि। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः। संज्ञायां तु लुङ् न। पाञ्चलोहितिकमिति। पञ्चगुञ्जापरिमितकनकाख्या। अत्र परिमाणान्तस्यासंज्ञा—' (७-३-१७) इति उत्तरपदवृद्ध्यभावः॥

विभाषा कार्षापणसहस्राभ्याम् (५. १. २९)

१. 'पन', २. 'पदस्य वृद्ध्यभाव.' अ. B. S. पाठः

एतदन्तादध्यर्धपूर्वाद्द्विगोर्लुग् वा स्यात् । अध्यर्धकार्षापणम् । द्विकार्षापणम् । अत्र टिठनो वा लुक् । अलुक्पक्षे प्रत्यादेशो वा । अध्यर्धप्रतिकम् । अध्यर्धकार्षापणिकम् । एवं द्विप्रतिकादि । अध्यर्धसहस्रं, द्विसहस्रम् । अत्र शतमानादणो वा लुक् । अलुकि,

सङ्ख्यायाः संवत्सरसङ्ख्यस्य च (७. ३. १५)

सङ्ख्यायाः परस्य संवत्सरस्य सङ्ख्यावाचिनश्चोत्तरपदवृद्धिः स्यात् । द्विसाहस्रम् । अध्यर्धस्यापि कृत्वसुचोऽन्यत्र सङ्ख्यात्वमस्तीति वृत्तिः । अध्यर्धसाहस्रम् । 'सुवर्णशतमानयोश्च वाच्यम्' (वा० ५-१-२१) । कर्षपरिमितं हेम सुवर्ण इति निरुक्त इति चोच्यते । ठञो वा लुक् । अध्यर्धसुवर्णम् । अध्यर्धसौवर्णिकम् । अणो वा लुक् । अध्यर्धशतमानम् । अध्यर्धशातमानम् इत्यादि ॥

द्वित्रिपूर्वान्निष्कात् (५. १. ३०)

लुग् वा स्यात् । द्विनिष्कं, द्विनैष्किकम् । त्रिनिष्कं, त्रिनैष्किकम् । 'बहुपूर्वाच्च' (वा० ५-१-३०) । बहुनिष्कं, बहुनैष्किकम् ॥

बिस्ताच्च (५. १. ३१)

उक्तपूर्वाद् बिस्ताद् वा लुक् । द्विबिस्तं, द्विबैस्तिकम् । त्रिबिस्तं, त्रिबैस्तिकम् । बहुबिस्तं, बहुबैस्तिकम् । सर्वत्र 'परिमाणान्तस्य—' (७-३-१७) इत्युत्तरपदवृद्धिः ॥

विंशतिकात् खः (५. १. ३२)

एतदन्तादध्यर्धपूर्वद्विगोः खः । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् ॥

---

१. 'संख्यायाः' M. U. S. पाठः. २. 'परस्य वृद्धिः' M. U. S. पाठः. ३. 'सुवर्णशतमानयोरुपसंख्यानम्' इति मुद्रितकाशिकादिपाठः. ४. 'ठको' क. पाठः. ५. 'बहुपूर्वाच्चेति वक्तव्यम्' इति मुद्रितकाशिकादिपाठः. ६. 'तद्धितपरस्पृ०' M. U. S. पाठः.

### खार्या ईकन् (५. १. ३३)

प्राग्वत् । अध्यर्धखारीकम् । द्विखारीकम् । 'केवलायाश्च वाच्यम्' (वा०५-१-३३) । खारीकम् । 'काकण्याश्च' । अध्यर्धकाकणीकम् । द्विकाकणीकम् । काकणीकम् ॥

### पणपादमाषशताद् यत् (५. १. ३४)

अध्यर्धपण्यम् । द्विपण्यम् । प्राण्यङ्गपादस्यैव पद्भावादिह 'पद्यत्यतदर्थे' (६-३-५३) इत्येतन्न । द्विपाद्यम् । द्विमाष्यम् । द्विशत्यम् । एवमध्यर्धादपि ॥

### शाणाद् वा (५. १. ३५)

शाणान्तादध्यर्धपूर्वद्विगोर्यद् वा । वेत्युक्तेः परिमाणठञो लुक् । द्विशाण्यं, द्विशाणम् । 'शताच्च वाच्यम्' (वा० ५-१-३५) । द्विशत्यं, द्विशतम् ॥

### द्वित्रिपूर्वादण् च (५. १. ३६)

द्वैशाणम् । त्रैशाणम् । चकाराद् यल्लुकौ च । अत्रासंज्ञाशाणयोरित्युक्तेरुत्तरपदवृद्ध्यभावात् पूर्वपदस्यैव वृद्धिः । शाण उन्मानभेदः ।

गुरुत्वमानमुन्मानं दैर्घ्यमाने प्रमाणगीः ।
प्रस्थादि परिमाणं स्यात् सङ्ख्या त्रिभ्योऽपि भिद्यते ॥

इह तु उन्मानस्यापि परिमाणत्वमिष्टम् । तत्र परिमाणान्युच्यन्ते —

द्वे मुष्टी प्रसृतिस्ते द्वे कुडपोऽञ्जलिसम्मितः ।
चत्वारः कुडपाः प्रस्थस्तच्चतुष्टयमाढकम् ॥
तदेव कंसः पात्रं च द्रोणः स्यात् तच्चतुष्टयम् ।
तौ द्वौ शूर्पः शूर्पयुगं गोणी वाहस्तु तद्द्वयम् ॥
वाहद्वयं तु खारी तामन्ये हस्तघनां विदुः ।

अथोन्मानानि —

आनितं दश भाराः स्युर्भारः स्याद् विंशतिस्तुलाः ।
तुला पलशतं प्रोक्तं शतमानं पलार्धके ॥

---

१ 'खार्याश्च' इति नास्ति । २. 'पूर्वाद् द्विगोः' ग. घ. ङ. पाठः ।
३. 'प्रमाणार्थे [illegible]' इति मुद्रितपुस्तकपाठः.

पलाङ्घ्रिरक्षः कर्षश्च कर्षाङ्घ्रिः शाण उच्यते ।
शाणाङ्घ्रिर्माष इत्युक्तः पञ्चांशस्तस्य कृष्णलः ॥
हेम्नः कर्षस्तु विस्तश्च सुवर्ण इति चोच्यते ।
माषः शाणस्तलं त्रुटिः कुडवश्च चतुर्गुणाः ॥
इत्युक्तेः परिमाणेऽपि शाणमाषौ मताविमौ ।
वराटकाख्यमूल्यानां विंशतिः काकणी भवेत् ॥
कार्षापणः पणो निष्को रूपकश्च समा इमे ।
तदर्धेऽर्धं च भागश्च पादस्तच्चतुरंशके ॥

इति ॥

तेन क्रीतम् (५. १. ३७)

अस्मिन्नर्थे ठञाद्यास्त्रयोदश यथोक्तं स्युः । साम्प्रतिकं मौद्रिकम् । नैष्किकम् । शत्यम् । शतिकमित्यादि । 'मूल्यादेवेष्टम्' । तेन वणिजा क्रीतमित्यादौ न । अर्धद्रोणेन क्रीतमिति परिमाणत्वाट्ठञि,

अर्धात् परिमाणस्य पूर्वस्य तु वा (७. ३. २६)

अर्धात् परिमाणस्य उत्तरपदवृद्धिः स्यात्, पूर्वपदस्य तु वा स्यात् । आर्धद्रौणिकम् । अर्धद्रौणिकम् । अर्धप्रस्थेन क्रीतमित्यत्र—

नातः परस्य (७. ३. २७)

अर्धात् परस्य परिमाणगताकारस्य वृद्धिर्न । पूर्वपदस्य तु वा स्यात् । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् ॥

तस्य निमित्तं संयोगोत्पातौ (५. १. ३८)

तस्य निमित्तभूतः संयोग उत्पात इति वार्थे उक्ताः स्युः । ठक् — सङ्ग्रामनिमित्तः साङ्ग्रामिको योगः । शत्यो राजसंयोगः । शुभाशुभसूचक उत्पातः । शत्योऽक्षिस्पन्दः । 'वातपित्तश्लेष्मसन्नि-

१. 'काकिणी' ग. घ. पाठः. २. 'परिमाणत्वाट्ठञ्', ३. 'अर्धात् परस्य परि', ४. 'पदस्य वृद्धिः' अ. ट. ड. पाठः. ५. 'वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम्' इति मुद्रितकाशिकादिपाठः.

पातेभ्यः शमनकोपनयोष्ठग् वाच्यः' (वा० ५-१-३८)। वातस्य शमनं कोपनं वा वातिकमौषधमित्यादि ॥

गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् (५. १. ३९)

गोशब्दात् सङ्ख्यादिवर्जितेभ्यो द्व्यज्भ्यश्चोक्तार्थयोर्यत् स्यात्। गव्यः संयोग उत्पातो वा। स्रुच्यः। ओजस्यं कर्म। क्रियापि संबन्धरूपेत्याहुः। सङ्ख्यादेस्तु न यत्। पञ्चकः। अष्टकः। प्रास्थिकः। 'अश्वगणवसूर्णोमाभङ्गावर्षाश्मभ्योऽपि न'। आश्विकः। गाणिकः। वासुकः। और्णिकः। औमिकः। भाङ्गिकः। वार्षिकः। आश्मिकः। 'ब्रह्मवर्चसाद् यद् वाच्यः' (वा० ५-१-३९) ब्रह्मवर्चस्यं कर्म ॥

पुत्राच्छ च (५. १. ४०)

अस्मादुक्तार्थयोश्छो यच्च। पुत्रीयः पुत्र्यो वा यागः ॥

सर्वभूमिपृथिवीभ्यामणञौ (५. १. ४१)

क्रमात् स्तः। सर्वभूमेर्निमित्तं संयोग उत्पातो वा। अनुशतिकादित्वात् सार्वभौमः। पार्थिवः ॥

तस्येश्वरः (५. १. ४२)

तत्र विदित इति च (५. १. ४३)

अनयोरर्थयोश्च सर्वभूमिपृथिवीभ्यामणञौ। सर्वभूमेरीश्वरः, तत्र विदितो वा सार्वभौमः। एवं पार्थिवः ॥

लोकसर्वलोकाभ्यां ठञ् (५. १. ४४)

आभ्यां तत्र विदिते ठञ्। लौकिकः। अनुशतिकादित्वात् सार्वलौकिकः ॥

तस्य वापः (५. १. ४५)

तस्य वापस्थानमित्यर्थे ठञादिः। द्रोणस्य वापः क्षेत्रं द्रौणिकम् ॥

---

१. [illegible] इति मुद्रितकाशिकादिपाठः

पात्रात् ष्ठन् (५. १. ४६)

पात्रमाढकं, तद्वापः पात्रिकी भूः । षित्वात् ङीष् ॥

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते (५. १. ४७)

तद्द्रव्यं वृद्ध्यादीनामन्यतमत्वेन दीयतेऽस्मिन्नित्यर्थे ठञादिः । पञ्च पणा वृद्धित्वेन स्वामिभागत्वेन लाभत्वेन राजभागत्वेनोत्कोचत्वेन वा यस्मिन् दीयन्ते स देशः पुरुषो वा धनसम्बन्धो वा पञ्चकः । एवं शत्यशतिकादि ॥

पूरणार्धाट्ठन् (५. १. ४८)

पूरणप्रत्ययान्तादर्धाच्च तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे ठन् । द्वितीयोऽंशो वृद्ध्यादिरस्मिन् दीयत इति द्वितीयिकः । पञ्चमिकः । अर्धिकः ॥

भागाद् यच्च (५. १. ४९)

ठंश्च स्यात् । भागो रूपार्धम् । सोऽस्मिन् वृद्ध्यादित्वेन दीयते इति भाग्यः । भागिकः ॥

तद्धरति वहत्यावहति भाराद् वंशादिभ्यः (५. १. ५०)

'वंशकुटजबल्वजमूलस्थाक्षस्थूणाश्लक्ष्णाक्षासेक्षुभ्यः'(स०५-१-५५) । एभ्यः पराद् भारशब्दात् तद्धरतीत्याद्यर्थे ठञादिः ।

देशान्तरप्रापणं वा योगो वा हरणं भवेत् ।
वहनं स्यादुद्धरणमन्यत् तूत्पादनं भवेत् ॥

वंशभारं नयति पुष्णात्युद्धरत्युत्पादयति वा वांशभारिकः । कौटजभारिकः । श्लाक्ष्णभारिकः । ऐक्षुभारिकः । भारभूतेभ्यो वंशादिभ्य इति च सूत्रार्थः । भारभूतं वंशं हरतीत्यादौ वांशिकः । कौटजिकः । ऐक्षुकः ॥

१. 'ठक्' ख, म, पाठः. २. 'भूत' ख, ग, ङ, पाठः

### वस्नद्रव्याभ्यां ठन्कनौ (५. १. ५१)

आभ्यां चतुर्ष्वर्थेषु क्रमात् ठन्कनौ। वस्नं मूल्यम्। वस्निकः। द्रव्यकः॥

### सम्भवत्यवहरति पचति (५. १. ५२)

तत्सम्भवतीत्याद्यर्थे ठञादिः।

स्थाल्यादिना हि शाल्यादेस्तुल्यमानस्य धारणम्।
सम्भवो न्यूनमानस्य धृतिस्त्ववहृतिर्भवेत्॥

प्रस्थं सम्भवत्यवहरति वा प्रास्थिकी स्थाली। प्रस्थं पचति प्रास्थिकी स्थाली नारी वा।

प्रस्थेन सम्यक् संपूर्या प्रस्थाद्वा लेशतोऽधिका।
पाकार्हजलयुक्प्रस्थपूर्या वा प्रास्थिकी मता॥

'पचत्यर्थे द्रोणादण् च'(वा०५-१,५२)। द्रौणम्। द्रौणिकं वा पात्रम्।

### आढकाचितपात्रात् खोऽन्यतरस्याम् (५. १. ५३)

परिमाणेभ्य एभ्यः सम्भवत्याद्यर्थे वा खः। आढकीनः। आचितीनः। पात्रीणः। विकल्पाट्ठञि आढकिकादि।

### द्विगोः ष्ठंश्च (५. १. ५४)

द्विगोराढकाद्यन्तात् ष्ठन् खश्च वा स्यात्। विकल्पाद् 'अध्यर्ध-पूर्व—' (५-१-२८) इति ठञो लुक् च। द्व्याढकिकः। षित्वाद् द्व्याढकिकी। द्व्याढकीनः। लुकि द्व्याढकः। एवमाचितपात्रयोः॥

### कुलिजाल्लुक्खौ च (५. १. ५५)

कुलिजान्ताद् द्विगोः सम्भवत्याद्यर्थे ठञो वा लुक् खश्च ष्ठंश्च स्यात्। तेन चतुर्धा। ठञि द्वैकुलिजिकम्। लुकि द्विकुलिजम्। खे द्विकुलिजीनम्। ष्ठनि द्विकुलिजिकम्। द्वैकुलिजिकामित्यत्र 'परि-

१. 'सम्पूर्य' म. ए. ङ. पाठः. २. 'ताव:' स. प. म. ए. ङ. पाठः
३. 'तत्पचतीति द्रोणादण् चेदिति मुद्रितमाधवीयादिपाठः. ४. 'आढकिकादिः म. ए. ङ. पाठः. ५. द्विकुलिजिकम् म. ए. ङ. पाठः.

माणान्तस्य—' (७-३-१७) इत्युत्तरपदवृद्धिप्राप्तौ 'कुलिजस्य च नेति वाच्यम्' (वा० ७-३-१७)

सोऽस्यांशवस्नभृतयः (५. १. ५६)

सोऽस्यांशो मूल्यं भृतिरिति वार्थे ठञादिः । पञ्च देयांशोऽस्येति पञ्चकं धनम् । पञ्च मूल्यमस्येति पञ्चकः । पञ्च भृतिरस्येति पञ्चको भृत्यो मासो वा ॥

क्रयात् प्रागपि मूल्योक्त्यै सोऽस्य वस्न इतीरितम् ।
अयोग्यमूल्यक्रीतेऽपि यथोक्तं क्रीतवर्णनम् ॥

तदस्य परिमाणम् (५. १. ५७)

अस्मिन्नर्थे ठञ्ठगाद्याः स्युः । अत्र सङ्ख्यापि परिमाणम् । प्रास्थिको व्रीहिः । वार्षशतिकः कालः । अत्र क्वचिद् द्विगोर्लुग् न । तेन द्विषष्टिर्जीवितपरिमाणमस्येति ठञ् । 'सङ्ख्यायाः संवत्सर—' (७-३-१५) इत्युत्तरपदवृद्धिः । द्विषाष्टिकः पुरुषः । एवं दशसहस्रपरिमितो दशसाहस्रः सङ्घः । शतमानाद्यण् ॥

सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु (५. १. ५८)

संज्ञायां सङ्घादिषु च वाच्येषु परिमाणार्थे सङ्ख्याया उक्तप्रत्ययाः स्युः । 'संज्ञायां स्वार्थे'(वा०५-१-५८) । पञ्चैव पञ्चकाः शकुनयः । सङ्घे पञ्चकः सङ्घः । सङ्घशब्दाप्रयोगे तु क्लीबे पुंसि वा । तेषां पञ्चकं द्विकं षट्कम् । सूत्रे अष्टाध्यायाः परिमाणमस्येत्यष्टकं पाणिनीयम् । अध्ययने, पञ्चकः पाठः । पञ्चवारपरिमित इत्यर्थः ॥

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (५. १. ५९)

द्विगुणाः पञ्च परिमाणमस्य इति पङ्क्तिः दशसङ्ख्या । द्विदशकपरिमाणा विंशतिरित्यादि ॥

पञ्चद्दशतौ वर्गे वा (५. १. ६०)

---

१. 'पञ्चकः पठः' M. U. S. पाठः   २. 'तत्र क्वचित्' M. P. S. पाठः

एतौ वर्गे वाच्ये वा स्तः। पञ्चपरिमितः समूहः पञ्चत्। दशत्। पञ्चकः। दशकः॥

त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् (५. १. ६२)

आभ्यां ब्राह्मणनाम्नि डण्। त्रिंशदध्यायपरिमितं ब्राह्मणं त्रैंशम्। चात्वारिंशम्॥

तदर्हति (५. १. ६३)

अस्मिन्नर्थे ठगादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। अभिगममर्हन्, अनुशतिकादित्वाद्, आभिगामिकः। शत्यः। शतिकः। 'नञ्स्नञौ भवनात्' (४. १. ८७): स्त्रियमर्हन् स्त्रैणो युवा॥

छेदादिभ्यो नित्यम् (५. १. ६४)

एभ्यो नित्यमर्हतीत्यर्थे ठगादिः। 'छेदभेदद्रोहदोहनर्तकर्षसम्प्रयोगविप्रयोगविप्रकर्षप्रेषणसम्प्रश्नेभ्यः (ग० ५-१ ५९)'। छेदं सर्वदार्हन्ति छैदिका दस्यवः। भैदिकाः। द्रौहिकाः। दौहिकाः। नर्तो नर्तनं, नार्तिकाः नटाः। कार्षिकः। साम्प्रयोगिकः। वैप्रयोगिकः। वैप्रकर्षिकः। प्रैषणिकः। साम्प्रश्निकः। 'विरागस्य विरङ्गादेशश्च' (ग०)[2] विरागं नित्यमर्हन्ति वैरङ्गिका विषयाः॥

शीर्षच्छेदाद्यच्च (५. १. ६५)

तन्नित्यमर्हन् शीर्षच्छेद्यः। चाट्ठक् शैर्षच्छेदिकः॥

दण्डादिभ्यो यः (५. १. ६६)

एभ्योऽर्हत्यर्थे यः स्यात्। 'दण्डमुसलमेधवधमधुपर्कार्घमेघोदकेभकशायुगेभ्यः (ग० ५-१-६४)। दण्डघातं मुसलघातं चार्हन् दण्ड्यः मुसल्यः। मेध्यः। वध्यः। मधुपर्क्यः। अर्घ्यो द्विजः। मेध्य उदकयश्च-कालः। रजस्वलार्थे तूदक्या प्रयुक्ता। इभ्यः। कश्योऽश्वः। युग्यः।

१. 'ठक्' ग. ११ घ १. पाठः. २ 'विराग विरङ्गं न' इति मुद्रितकाशिकापाठ ३. 'दण्' इति मुद्रितसिद्धान्तकौमुदीपाठः. नायसिद्धान्तकौमुदीपाठयोः 'दण्डादिभ्य.' इत्येव सूत्रपाठः (अध्याद: ६९५. ८५१).

'स्तवार्हः स्तव्य' इति च माधवः ॥

पात्राद् घंश्च (५. १. ६८)

यश्च स्यात् । अनीचजातित्वात् स्थाल्यादिपात्रे भोजनमर्हन् पात्रियः । पात्र्यः ॥

कडङ्करदक्षिणाच्छ च (५. १. ६९)

यश्च । कडङ्करो तुषं, तदर्हन् काडङ्करीयः कडङ्कर्यो वा गौः । दक्षिणार्हो दाक्षिणीयो दक्षिण्यः ॥

स्थालीबिलात् (५. १. ७०)

अस्माच्छयौ । स्थालीबिलार्हाः स्थालीबिलीयाः स्थालीबिल्या वा शोधिततण्डुलाः ॥

यज्ञर्त्विग्भ्यां घखञौ (५. १. ७१)

यज्ञार्हं यज्ञियम् । ऋत्विगर्हं आर्त्विजीनो यष्टा । ऋत्विग्भावार्होऽप्यार्त्विजीनो द्विजः । आर्हीया गताः । अतः परं ठञेव निर्भयमास्ते ॥

पारायणतुरायणचान्द्रायणं वर्तयति (५. १. ७२)

एभ्यस्तद्वर्तयतीत्यर्थे ठञ् स्यात् । कृत्स्नवेदजपं निर्वर्तयन् पारायणिकः । तुरायणाख्यं यज्ञं निर्वर्तयन् तौरायणिकः । चान्द्रायणिकः । प्राग्वतीयेषु सङ्ख्यापूर्वाणामपीष्यम् । द्वैपारायणिकः ॥

संशयमापन्नः (५. १. ७३)

संशयं प्राप्तः सांशयिकोऽर्थः ॥

योजनं गच्छति (५. १ ७४)

यौजनिकः । 'क्रोशशतयोजनशतयोश्च वाच्यम्' (वा० ५-१-७४) क्रौशशतिको यौजनशतिकश्च तद्गन्ता । आभ्यां 'ततोऽभिगमनम् अर्हतीत्यर्थेऽपीष्यम्' (वा० ५-१-७४) क्रोशशतादभिगमनमर्हति क्रौशशतिको

१. 'स्थाल्यादिपात्रे' ग. घ. ङ. पाठः. २. 'ततोऽभिगमनमर्हति' इति मुद्रितकाशिकादिपाठः. ३. 'अर्हतीति च' इति नास्ति [illegible] 'क्रोशेति च वक्तव्यम्' इति सिद्धान्तकौमुदीपाठः.

भिक्षुः, यौजनशतिकः ॥

पथः ष्कन् (५. १. ७५)

पथिन्शब्दात् तद्गच्छतीत्यर्थे ष्कन् । पन्थानं गच्छन् पथिकः । षित्वाद् पथिकी ॥

पन्थो ण नित्यम् (५. १. ७६)

नित्यं गच्छतीत्यर्थे पथः पन्थादेशो णश्च । पन्थानं नित्यं गच्छन् पान्थः ॥

उत्तरपथेनाहृतं च (५. १. ७७)

अस्मात् तेनाहृतं तेन गच्छतीति चार्थे ठञ् । औत्तरपथिको भारोऽध्वगो वा । 'अजशङ्कुवारिजङ्गलस्थलकान्तारपूर्वाच्च पथष्ठगिष्टः' (वा०५·१-७७)। अजपथेनाहृतम् । आजपथिकम् । तेन गच्छन्नप्येवम् । शाङ्कुपथिकम् । वारिपथिकम् । जाङ्गलपथिकमित्यादि [1] जङ्गलो मरुः । 'अजपथशङ्कुपथयोराहृतार्थ एव' इति माधवः । 'स्थलपथान्मधुकमरिचयोरर्थयोराहृतेऽण् वाच्यः' (वा० ५- १- ७७) स्थलपथेनाहृतं स्थालपथं मधुकं मरिचं वा । मधुकं मधुयष्टिः ॥

कालात् (५. १. ७८)

अतः परं 'व्युष्टादिभ्योऽण् ' (५-१-९७) इत्यन्तं कालात् प्रत्ययाः ॥

तेन निर्वृत्तम् (५. १. ७९)

कालेभ्योऽस्मिन्नर्थे ठञ् । मासेन निष्पादितं मासिकम् । 'अह्लोपोऽनः' (६- ४ १३४) । आह्निकम् ॥

तमधीष्टो भृतो भूतो भावी (५. १. ८०)

अत्यन्तसंयोगद्वितीयान्तात् कालादधीष्टाद्यर्थे ठञ् । सत्कृत्य व्यापारितोऽधीष्टः । मासमधीष्टो मासिको गुरुः । मासं भृतो मासिको दासः । मासं भृता मासिकी वृत्तिः । मासं भावी मासिक

---

१. 'आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्' इति, २. 'मधुकमरिचयोरण् स्थलात्' इति च शुद्धितवार्त्तिकादिपाठः.

वत्सरः । एवं सांवत्सरिकादि ॥

मासाद् वयसि यत्खञौ (५. १. ८१)

वयसि द्योत्ये भूतार्थ एव सम्भवति । मास्यो मासीनो वा बालः ॥

द्विगोर्यप् (५. १. ८२)

मासान्ताद् द्विगोर्वयसि द्योत्ये यप् । द्वौ मासौ भूतो द्विमास्यः । दशमास्यः ॥

षण्मासाण्ण्यच्च (५. १. ८३)

अस्माद् वयसि ण्यद्[1] यप् ठञ् च । षाण्मास्यः । षण्मास्यः । षाण्मासिको वा बालः ॥

अवयसि ठंश्च (५. १. ८४)

षण्मासाद् वयोद्योतनाभावे निर्वृत्ताद्यर्थपञ्चके ठन् ण्यच्[2] स्यात् । षण्मासिकः षाण्मास्यो वा ग्रन्थः ॥

समायाः खः (५. १. ८५)

समया निर्वृत्तादिः समीनः ॥

द्विगोर्वा (५. १. ८६)

समान्ताद् द्विगोर्निर्वृत्तादौ वा खः । द्विसमीनो द्वैसमिको वा ग्रन्थः ॥

रात्र्यहस्संवत्सराच्च (५. १. ८७)

एतदन्ताद् द्विगोर्निर्वृत्तादौ वा खः । द्विरात्रीणः । द्वैरात्रिकः। अह्नः खे टिलोपः । द्व्यहीनः । ठञ्यल्लोपः । द्वैयह्निकः । द्विसंवत्सरीणः । 'सङ्ख्यायाः संवत्सर—' (७-३-१५) इत्युत्तरपदवृद्धिः[3] । द्विसांवत्सरिकः ॥

वर्षाल्लुक् च (५. १. ८८)

वर्षान्ताद् द्विगोर्निर्वृत्तादौ खष्ठञ्लुक् च । द्विवर्षीणः । द्विवर्षः वाजे तु—

१. 'ण्यद्', २. 'ण्यद च', ३. 'वृद्धिः' [illegible]

वर्षस्याभविष्यति (७. ३. १६)

भावीत्यर्थादन्यत्र सङ्ख्यायाः परस्य वर्षस्य वृद्धिः स्यात् । द्विवार्षिकं निर्वृत्तादि । द्वे वर्षे भावी तु द्वैवर्षिकः ॥

चित्तवति नित्यम् (५. १. ८९)

चेतने वर्षान्ताद् द्विगोर्नित्यं लुक् । 'भूतार्थ एवेष्टम्' । द्वे वर्षे भूतो द्विवर्षो गौः । अचित्ते तु द्विवर्षीणो व्याधिरित्यादि ज्ञेया ॥

षष्टिकाः षष्टिरात्रेण पच्यन्ते (५. १. ९०)

षष्टिरात्रेण पच्यत इत्यर्थे कश्चिद् व्रीहिः षष्टिको नाम ॥

तेन परिजय्यलभ्यकार्यसुकरम् (५. १. ९३)

परिजय्यमित्याद्यर्थे ठञ् । मासेन परिजेतुं त्यक्तुं शक्यो मासिको व्याधिः । मासेन लभ्यं मासिकं धनम् । कार्ये—मासिकं व्रतम् । सुकरे—मासिकोऽयं भवनः ॥

तदस्य ब्रह्मचर्यम् (५. १. ९४)

तदित्युक्त्या प्रागवद् द्वितीयान्तात् कालाद् ब्रह्मचर्यमस्येत्यर्थे ठञ् । मासं ब्रह्मचर्यमस्येति मासिको व्रती । स कालोऽस्य ब्रह्मचर्यस्येत्यर्थेऽपि ठञ् । मासः कालोऽस्येति मासिकं ब्रह्मचर्यम् । 'महानाम्न्यादेस्तस्य ब्रह्मचर्यमिति ठञ् वाच्यः' (वा०५-१-९४) महानाम्न्या व्रतं माहानाम्निकम् । 'अस्वाङ्गे-'(वा०६-३-३५) । पुंवत्त्वा-न्माहानामिकमिति स्थिते टिलोपः । एवमादित्यव्रतिकः । गौदानिकः । 'महानाम्न्यादेस्तच्चरत्यपि ठञ् वाच्यः' (वा० ५-१-९४) । महा-नाम्न्या व्रतं चरन् माहानामिक इत्यादि । व्रतार्थोऽन्तर्भूतः । 'अवा-न्तरदीक्षादिभ्यश्चरत्यर्थे डिनिर्वाच्यः'(वा० ५-१-९४) । डिन्त्वमुच्चा-रार्थम् । अवान्तरदीक्षी तिलव्रती । देवव्रती । महाव्रती ।

---

१. 'वाच्ये वर्षान्ताद्', २. 'पच्यन्ते इत्यर्थे' M. U. S. पाठः. ३. 'कालात् तेन परिजय्य', ४. 'महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम्' इति काशिका, महा.. ... ... . .. षष्ठ्यन्तेभ्य उपसंख्यानमिति सिद्धान्तकौमुदी । ५. 'व्रतिकम्', ६. 'गौदानिकम्' M. U. S. पाठः. ७. 'तच्चरतीति च' ८. 'दीक्षादिभ्यो डिनिर्वक्तव्यः' इति काशिका ।

'अष्टाचत्वारिंशतो ड्वुंश्च (वा० ५-१-९४)। चकाराड्डिनिः। अष्टाचत्वारिंशद् वर्षाणि व्रतं चरन् अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी। 'चातुर्मास्यानां यलोपो ड्वुन्च डिनिश्च' (वा० ५-१-९४) चातुर्मास्ययज्ञस्य व्रतं चरन् चातुर्मासिकः, चातुर्मासी॥

तस्य च दक्षिणा यज्ञाख्येभ्यः (५. १. ९५)

यज्ञनामभ्यस्तस्य दक्षिणेत्यर्थे ठञ्। वाजपेयस्य दक्षिणा वाजपेयिकी। राजसूयिकी॥

तत्र च दीयते कार्यं भववत् (५. १. ९६)

कालेभ्यस्तत्र देयं तत्र कार्यमित्यर्थयोर्भववत् कालाठ्ठञादयः स्युः। मासे देयं कार्यं वा मासिकम्। हैमनम्। सान्ध्यमित्यादि।

तत्र दीयत इत्यस्य यज्ञाख्यैरपि चान्वयात्।
वाजपेये दीयमानमन्नाद्यं वाजपेयिकम्॥

व्युष्टादिभ्योऽण् (५. १. ९७)

'व्युष्टनित्यनिष्क्रमणप्रवेशनतीर्थसंग्रामसङ्घाताग्निपदपीलुमूलादिभ्यः' (स० ५-१-१०२)। व्युष्टं प्रभातं तत्र देयं कार्यं वा वैयुष्टम्। नैत्यम्। नैष्क्रमणम्। प्रावेशनम्। तैर्थम्। सांग्रामम्। सांघातम्। आग्निपदम्। पैलुमूलम्। आकृतिगणोऽयम्। प्रावासम्। औपवासम्। पार्वणम्। श्राद्धम्॥

तेन यथाकथाचहस्ताभ्यां णयतौ (५. १. ९८)

आभ्यां तेन दीयते कार्यमिति वार्थे क्रमाण्णयतौ स्तः। यथाकथाचेत्यनादरेऽव्ययसमुदायः। अनादरेण दीयते कार्यं वा याथाकथाचम्। हस्तेन देयं कार्यं वा हस्त्यम्॥

सम्पादिनि (५. १. ९९)

तेन सम्पादीत्यर्थे ठञ्। शोभाविशेषः सम्पत्तिः। चन्दनेन विशेषतः शोभते चान्दनिकमुरः॥

कर्मवेषाद् यत् (५. १. १००)

कर्म व्यायामः। तेन सम्पादी कर्मण्यः वेष्यः॥

तस्मै प्रभवति सन्तापादिभ्यः (५. १. १०१)

एभ्योऽस्मिन्नर्थे ठञ् । 'समस्तापनाहग्रामयोगवेशपेषघातपराय-मोदनेभ्यः' (स० ५-१-१०७) । समः परेभ्यस्तापनाहादिभ्य इत्यर्थः । सन्तापाय शक्तः सान्तापिकः । सान्नाहिकः । सांग्रामिकः । सांयोगिकः । सांवेशिकः । सांपेषिकः । सांघातिकः । सम्परायो युद्धं, साम्परायिकः । साम्मोदनिकः । 'निरः पेषघोषाभ्याम्' (स० ५-१-१०८) नैष्पेषिकः । नैर्घोषिकः । 'निव्युपेभ्यः सर्गात्' (स० ५-१-१०९) नैसर्गिकः । वैसर्गिकः, उपसर्ग उपद्रवः । औपसर्गिकः । 'प्रोपाभ्यां वासात्' (स० ५-१-११०) प्रावासिकः । औपवासिकः । सक्तुमांसौदनमांसौदनेभ्यश्च' (स० ५-१-१११) साक्तुकः । मांसिकः । औदनिकः । मांसौदनिकः ॥

योगाद् यच्च (५. १. १०२)

योगाय शक्तो योग्यो मुनिः । यौगिकः ॥

कर्मण उकञ् (५. १. १०३)

कर्मणे शक्तं कार्मुकम् । धनुष्येव ॥

समयस्तदस्य प्राप्तम् (५. १. १०४)

समयात् तदस्य प्राप्तमित्यर्थे ठञ् । समयोऽस्य प्राप्त इति सामयिकं कार्यम् ।

ऋतोरण् (५. १. १०५)

ऋतुरस्य प्राप्त इत्यार्तवं पुष्पम् । स्वयोग्यर्तौ प्राप्ते जातमित्यर्थः । 'उपवस्त्रादिभ्योऽप्यण् वाच्यः' । उपवस्ता प्राप्तोऽस्येत्यौपवस्त्रं उपवासार्हकालः । उपवास एवौपवस्त्रमित्यन्ये । प्राशिता प्राप्तोऽस्येति प्राशित्रं प्राशनार्थो हविर्भागः ।

कालाद्यत् (५. १. १०७)

कालः प्राप्तोऽस्येति काल्यं कर्म ॥

१. 'सन्तापाय शक्तः' म. प. ह. पाठः. २. 'उपवस्त्रादिभ्य उपसंख्यानम्' इति काशिकादिपाठः.

## प्रकृष्टे ठञ् (५. १. १०८)

प्रकृष्टो दीर्घः कालोऽस्येत्यर्थे ठञ् । कालिकं वैरम् ॥

## प्रयोजनम् (५. १. १०९)

तदस्य प्रयोजनमित्यर्थे ठञ् । तच्च फलं हेतुर्वेति रामः । पौष्टिकं कर्म । मोक्षार्थी मौक्षिको नरः । हेतौ- वैवाहिक उत्सवः । अस्य हेतिः प्रयोजनमस्येति आस्यहैतिकः । अनुशतिकादित्वाद् वृद्धिः । तत्र गणे निपातनादलुक् ॥

## विशाखाषाढादण् मन्थदण्डयोः (५. १. ११०)

विशिष्टा शाखा विशाखा । सा कारणमस्येति वैशाखो मन्थाख्यः । आषाढः पालाशदण्डः ॥ 'चूडादिरण् वाच्यः' ॥ (वा० ५-१-११०) ॥ चूडा प्रयोजनमस्येति चौलं कर्म । केलिःफलः कैलो देशः । श्रद्धाहेतुकं श्राद्धं कर्म ॥

## अनुप्रवचनादिभ्यश्छः (५. १. १११)

उत्थापनीगायत्र्याद्युपदेशः प्रयोजकोऽस्येति अनुप्रवचनीयो होमः । अत्र ओजः—'उदुपाभ्यां स्थापेरनान्ताच्छः' (स० ५-१-१२३- उत्थापनीयम् । उपस्थापनीयम् । 'अनोर्वचिवासिविशिभ्यः (स० ५-१-१२४)अनुवचनीयम् । अनुवासनीयम् । अनुवेशनीयम् । 'रुहेः प्राङ्भ्यां च' (स० ५-१-१२५) । चादनोश्च । प्ररोहणीयम् । आरोहणीयम् । अनुरोहणीयम् । समाङो विशिरभिभ्याम्' (स० ५-१-१२६) । समावेशनीयम् । समारम्भणीयम् । 'विशिपूरिपदिरुहिभ्यः सपूर्वपदेभ्यः' (स० ५.१.१२७) अनान्तादिति सर्वत्र योज्यम् । गृहप्रवेशनीयम् । कलशपूरणीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् । 'पुण्याहस्वस्तिशान्तिभ्यो वाचनाल्लुक्' (स० ५-१-१२९) । प्रयोजनठञो लुक् । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् ।

१. 'उत्सवः ॥ विशाखा ग. ग. ङ. छ. M. U. S. पाठः. २. 'प' ग. पाठः. ३. 'चूडादेरुपसंख्यानम्' इति मुद्रितकाशिकादिपाठः. ४. 'केलिः फलं' M. U. S. पाठः. ५. गायत्र्याद्युपदेशः प्रयोजनमस्येति M. U. S. पाठः. ६. 'अनोर्वचिप्रवचिवासिभ्यः' इतिमुद्रितसरस्वतीकण्ठाभरणपाठः. ७. 'वाचि', ८. वाच' M. U. S. पाठ. ९. 'शादिसमाभ्य इति मुद्रितसरस्वतीकण्ठाभरणपाठः.

शान्तिवाचनम् । 'स्वर्गधनायुर्यशःकामेभ्यो यत् ।' (सू० ५-१-१२८ स्वर्गफलं स्वर्ग्यम् । धन्यम् । आयुष्यम् । यशस्यम् । काम्यम् ॥

समापनात् सपूर्वपदात् (५. १. ११२)

उक्तार्थे छः स्यात् । व्रतसमापनीयमन्नदानम् ।

ऐकागारिकट् चोरे (५. १. ११३)

एष चोरेऽर्थे टिन्निपात्यः । सुजने शोधितुमशक्यत्वादसहायं गृहं प्रयोजनमस्येत्यैकागारिकश्चोरः । आत्मीयैकगृहपूरणार्थित्वाद्वा ॥

आकालिकडाद्यन्तवचने (५. १. ११४)

आदिरेवान्तकालोऽपि यस्य क्षणिकवस्तुनः ।
तस्मिन्निपातितोऽसौ टित् तस्मादाकालिकी तटित् ॥
अन्ये तु पूर्वेऽह्न्यारब्धं यस्मिन्काले ज्वरादिकम् ।
उत्तरेऽह्न्यपि तत्काले नष्टमाकालिकं विदुः ॥

'आकालाट्ठनपि वाच्यः' । ङीब्भावो भेदः । आकालिका तटित् ॥

इति ठञ्भागः ॥

तेन तुल्यं क्रिया चेद्वतिः (५. १. ११५)

तेन तुल्यमित्यर्थे क्रियायास्तुल्यत्वे वतिः स्यात् । वतेः स्वरादिपाठेनाव्ययत्वात् सुब्लुक् । रामवद् वर्तते । वसूनि तोयं घनवद् व्यतारीत् । तेनेति तच्छब्देन कर्मादेरपि ग्रहात् तृणवद् रिपुं छिनत्ति । क्षौमवद् वल्कलेन वरत इत्यादि । क्रिया चेदित्युक्तेर्गुणतुल्यत्वे न । पित्रा तुल्यः स्थूलः । तत्रापि वर्तत इत्यादिक्रियाध्याहारे पितृवत् स्थूल इति च स्यात् ॥

१. 'शस्ता' M. D. & पाठः. २. 'चोरे' इति मुद्रितकाशिकादिपाठः M. D. &. पाठश्च, ३. 'ज्वराधिकं' M. D. &. पाठः. ४. 'आकालाट्ठश्च' इति मुद्रितकाशिकादिपाठः, ५. 'क्रा' क. ख. ग. पाठः. ६. 'प्रहणात्' क. पाठः ७. 'रि स्या' क. ख. ग. M. D. &. पाठः.

## तत्र तस्येव (५. १. ११६)

तत्रेवेति, तस्येवेति चार्थे गुणादितुल्यत्वेऽपि वतिः स्यात् । मधुरावद् द्वारवत्यां गृहम् । कृष्णवद् रामस्य वीर्यम् ।

## तदर्हम् (५. १. ११७)

तस्यार्हमित्यर्थे क्रियाया अर्हत्वे वतिः । राजवद् धर्मज्ञश्चेष्टते । राज्ञो योग्यमित्यर्थः । 'स्त्रीवन्सा भूम' इति भाष्योक्तेः, 'स्त्रीपुंवच्च' (१–२–६६) इति सूत्रोक्तेश्च वतिना नञ्स्नञोर्बाधः ।

## तस्य भावस्त्वतलौ (५. १. ११९)

शब्दस्य प्रवृत्तिनिमित्तं भावः । तस्य भाव इत्यर्थे त्वतलौ स्तः । स्वभावात् क्लीबत्वस्त्रीत्वे । साधोर्भावः साधुत्वं, साधुता । *'त्वतलोर्गुणवचनस्य पुंवत्त्वं वाच्यम्' (वा० ६-३-३५) । सुन्दर्या भावः सुन्दरत्वं सुन्दरता । प्रमाणग्राहिणीत्वेनेति भट्टोक्तिश्चिन्त्या । 'ह्रस्वात् तादौ—' (८-३-१०१) इति षत्वम् । यजुष्ट्वं यजुष्टा । दीर्घात्तु गीस्त्वम् ।

## आ च त्वात् (५. १. १२०)

'ब्रह्मणस्त्वः' (५-१-१३६) इत्यतः प्राग् बाधकस्थलेऽपि त्वतलौ स्तः । पृथुत्वं पृथुतेत्यादि । नञ्स्नञ्भ्यामप्यनयोर्योगाद् स्त्रैणं स्त्रीत्वं स्त्रीता, पौंस्नं पुंस्त्वं पुंस्ता ॥

## पृथ्वादिभ्य इमनिज्वा (५. १. १२२)

एभ्यो भाव इमनिज्वा स्यात् ॥

## टेः (६. ४. १५५)

इष्ठेमेयस्सु परेषु भस्य टेर्लोपः स्यात् ॥

---

१. 'पुंवद्भावो वक्तव्य' इति मुद्रितकाशिकापाठः

* 'त्वतलोर्गुणवचनस्य ।' इति मुद्रितपाठः ...

२ ऋतो हलादेर्लघोः (६-४-१६१)

इष्ठेमेयस्सु परेषु हलादेरजन्तस्य लघोः ऋकारस्य रः स्यात् । पृथोर्भावः प्रथिमा । म्रदिमा । वेत्युक्तेर्वक्ष्यमाणोऽण् च । पार्थवम् । मार्दवम् । पहलादित्वाद् ऋचिमेत्यत्र रो न । अलघुत्वात् कृष्णिमादौ न । किं बहुना, पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वमस्ति । 'पृथुमृदुपटुपाण्डुखण्डचण्डस्वादुसाधुबहुमहदणु * तनुचावाङ्गुलंघुभ्यः' । (स०५-१-१३६) प्रथिमा । म्रदिमा । पटिमा । पाण्डिमा । खण्डिमा । चण्डिमा । स्वादिमा । साधिमा ॥

बहोर्लोपो भू च बहोः (६. ४. १५८)

बहोः परयोरिमेयसोरादिलोपः स्यात्, बहोश्च भूभावः । भूमा । महिमा । अणिमा । तनिमा । चारिमा । आशिमा । लघिमा । 'होडवत्सपाकाकिञ्चनर्जुवक्रकालदूरस्वक्षिप्रक्षुद्रप्रियोरुगुरुवृद्धतृप्रेभ्यश्च' (स० ५-१-१३७) आचास्त्रयो बालार्थाः । होडिमा । वत्सिमा । पाकिमा । आकिञ्चनिमा । ऋजिमा । वक्रिमा । कालिमा ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः (६. ४. १५६)

इष्ठेमेयस्सु परेषु यणादिपरं लुप्यते, पूर्वस्येको गुणश्च स्यात् । ह्रसिमा । इको गुणः । क्षेपिमा । क्षोदिमा ।

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः (६. ४. १५७)

इष्ठेमेयस्सु परेषु प्रियादीनां क्रमात् प्रादयः स्युः । प्रियस्य प्रः । प्र इमन् । टिलोपे प्राप्ते,

१. 'ऋचिमे', २. 'तृतीयमपाद', ३. 'एषोमिष्ठेमेयस्सु' ग. घ. ङ. पाठः.

* 'तनुक्षुल्लघुभ्यः' इति, 'चावोऽयत्नतृदकालप्रक्षिप्रक्षुद्रस्तप्रियेभ्यश्च' इति च मुद्रितसरस्वतीकण्ठाभरणपाठः.

प्रकृत्यैकाच् (६. ४. १६३)

इष्ठादिषु परेष्वेकाच् प्रकृत्या स्यात् । 'आद्गुणः'[1](६-१-८७) । प्रेमा । इमनिजन्ताः पुंस्येव । क्लीबे तु प्रेमशब्दः औणादिकमनिन्नन्तः । उरोर्वर्, गुरोर्गर्, बहुलस्य बंहु, तृप्रस्य त्रप् । वरिमा । गरिमा । बंहिमा त्रपिमा । तृप्रं दुःखकरम् । सुखिमा मौढिमेत्यादिष्विमनिज् ग्राम्य इति वामनः ।

राकार्थे पूर्णिमाशब्दे भावे क्तोऽन्तादिमच् किल ।
चन्द्रस्य पूरणं पूर्णं तन्निर्वृत्ता हि पूर्णिमा ॥

वर्णदृढादिभ्यः ष्यञ्च (५. १. १२३)

वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञिमनिच्च स्यात् । शौक्ल्यं, शुक्लिमा । कार्ष्ण्यं, कृष्णिमा । ष्यञः पित्करणादीकारो बहुलमिति वामनः । तेन ङीष्, 'हलः' (६-४-१५४) इति यलोपः । शौक्लीत्यादि । बहुलोक्तेर्नारुण्यमित्यादौ न ङीष् । 'आ च त्वात्' (५-१-१२०) इत्युक्तेः शुक्लत्वं, शुक्लता । 'दृढपरिवृढकृशाम्लचुक्रलवणमधुरशीतोष्णजडेभ्यः' (स० ५-१-१३८) । दार्ढ्यं, द्रढिमा । पारिवृढ्यं, परिव्रढिमा । कार्श्यं, क्रशिमा । आम्ल्यम्, अम्लिमा । चुक्रोऽम्लार्थः । चौक्र्यं, चुक्रिमा । लावण्यं, लवणिमा । माधुर्यं, मधुरिमा । शैत्यं, शीतिमा । औष्ण्यम् , उष्णिमा । जाड्यं, जडिमा । 'बालतरुणमन्दमूकमूलकालमूर्खपण्डितबधिरस्थिर*बहुलदीर्घेभ्यश्च' (स० ५-१-१३९) । बाल्यं, बालिमा । तारुण्यं तरुणिमा । मान्द्यं, मन्दिमा । मौक्यं, मूकिमा । मौल्यं, मूलिमा । काल्यं, कालिमा । मौर्ख्यं, मूर्खिमा । पाण्डित्यं, पण्डितिमा । बाधिर्यं बधिरिमा । स्थिरादीनां स्थैर्यं, बाहुल्यं, दैर्घ्यम् । इमनिचि 'प्रियस्थिर—' (६-४-१५४) इति स्थबंहिद्राघादेशाः । स्थेमा बंहिमा द्राघिमा । 'वैयातलातशारदेभ्यः' (स० ५-१-१४०) । वैयात्यं, वियातिमा ।

---

१. 'वर्षि' M. U. S. पाठः. २. 'ष्यादिमनिच् कि', ३. 'ष्याद्यो' ग. पाठः

---

* 'बहुलपथिरदीर्घेभ्यः' इति मुद्रितसरस्वतीकण्ठाभरणपाठः

विलातो बालः । वैलात्यं, विलातिमा । वैशारद्यं, विशारदिमा । 'सम्यश्च प्रतिमन्नोश्चर्याम्' (सू० ५-१-१४१) । चकाराद्‌ वेत्थ । साम्मत्यं, सम्मतिमा । वैमत्यं, विमतिमा । साम्मनस्यं वैमनस्यम् । टिलोपः ॥ सम्मनिमा । विमनिमा । 'विमतिसम्मत्योरणपि' इति रामः । वैमतं साम्मतम् ॥

गुणवचनब्राह्मणादिभ्यः कर्मणि च (५. १. १२४)

क्रिया क्रियमाणं च वस्तु कर्म । गुणवचनेभ्यो ब्राह्मणादिभ्यश्च भावे कर्मणि च ष्यञ् स्यात् । मूढस्य भावः, कर्म वा मौढ्यम्[1] । माणव्यम् । कविना क्रियमाणं काव्यम् । 'आ च त्वात्' (५-१-१२०) इत्युक्तेरेषां कर्मण्यपि त्वतलौ । मूढस्य भावः कर्म वा मूढत्वं मूढता । एवं ब्राह्मणादेरपि । 'ब्राह्मणमाणववाडवधूर्तचौरचपलकुशलनिपुणसुहितपिशुनबालिशालसेभ्यः' (सू० ५-१-१४३) । ब्राह्मण्यं, माणव्यं, वाडव्यम्, इत्यादि । सुहितस्तृप्तः । 'गडुलदीनदायादविदग्धोचितसमग्रशीलतत्परेदंपरयथातथयथापुरपुनःपुनरभीक्ष्णतरतमप्रकामयथाकामेभ्यश्च' (सू० ५-१-१४४) । गाडुल्यं, दैन्यं, दायाद्यं, दायादैर्नीयमानमपि दायाद्यं धनं[2], वैदग्ध्यं वैदग्धी । औचित्यम्, औचिती । सामग्र्यं, सामग्री । शीलस्य भावः शैली । तात्पर्यम् । ऐदम्पर्यम् । यथातथमित्यस्य भावो याथातथ्यम् । एवं याथापुर्यम् । पुनः पुनर्जातस्य भावः पौनःपुन्यम् । आभीक्ष्ण्यम् । तरतमशब्दौ प्रत्ययानुकरणवशादल्पप्रकर्षवति बहुप्रकर्षवति चार्थे वर्तेते । तेन तरतमानां भावस्तारतम्यमतिशयविशेषः । प्रकाममित्यस्य प्राकाम्यम् । याथाकाम्यं याथाकामी । 'एकद्वित्रिस्वान्येभ्यो भावात्' (सू० ५-१-१४५) । 'एषां पञ्चानां स्वार्थे ष्यञ्' इति हरः । एकभाव एकत्वं, तदेव ऐकभाव्यं, द्वैभाव्यं, त्रैभाव्यं स्वाभाव्यम्, आन्यभाव्यम् । 'तत्स्वसमविषमपरसमध्येभ्यः स्थात्' (सू० ५-१-१४६) । तात्स्थ्यं, स्वास्थ्यं, सामस्थ्यं, वैषमस्थ्यं, पारमस्थ्यं, माध्यमस्थ्यम् । नञ्पूर्वादपि आस्वस्थ्यम्, आसमस्थ्यम् । 'निर्दुर्भ्यां कुलात्' (सू० ५-१-१४७) ।

---

1. 'मौढ्यम्' ग. पाठः. 2. 'दायादै र्नीयमान' ख. ग. ङ. पाठः.

नैष्कुल्यं, दौष्कुल्यम् । 'दुष्कराजस्यः पुरुषात्' (सू० ५-१-१४८) । दौष्पुरुष्यं, कापुरुष्यं, 'राजपुरुषात् ष्यञि' इत्यनुशतिकादिपाठात् राजपौरुष्यम् । 'सुदुर्भ्यां भगात्' । सौभाग्यं, दौर्भाग्यं, 'हृद्भग—' (७-३-१९) इति द्विवृद्धिः । 'व्याकुपेभ्यो रावयात्' (सू० ५-१-१४९) । वैरावय्यम् । आरावय्यम् । औपरावय्यम् । विरावयादयो जनपदतुल्यक्षत्रियापत्यानि । 'गणाधिभ्यां पत्युः' (सू० ५-१-१५०) । गाणपत्यम् । आधिपत्यम् । 'वेः शायशस्तिभ्याम्' (५-१-१५१) । विशायस्य कर्म वैशाय्यम् । वैशस्त्यम् । 'स्वाधि*स्वजनयुवभ्यो राज्ञः' (सू० ५-१-१५२) । सौराज्यम् । आधिराज्यम् । स्वाराज्यम् । जानराज्यम् । यौवराज्यम् । 'अर्हतो नुम् च' (सू० ५-१-१५४) । आर्हन्त्यम् । आर्हन्ती । 'समो वदिविशिभ्यां णिनः' (सू० ५-१-१५५) । संपूर्वाभ्यां णिन्यन्ताभ्यामाभ्यां ष्यञ् । संवादिनो भावः सांवाद्यम् । सांवेश्यम् । सम्पादीति काश्यपपाठः । साम्पाद्यं शोभावत्त्वम् । 'बहोश्च भावः' (सू०५-१-१५६) । समो बहोश्च पराण्णिन्यन्ताद् भावे ष्यञ् । बाहुभाव्यम् । साम्भाव्यम् । 'शीर्षनिर्विभ्यो हनः' (सू० ५-१-१५७) । णिन्यन्तादेव । शैर्षघात्यम् । नैर्घात्यम् । वैघात्यम् । 'नञः क्षेत्रज्ञेश्वरविदूरपिशुननृशंसयथातथयथापुरेभ्यः' (सू० ५-१-१५८) । 'नञः शुचीश्वर—' (७-३-३०) इत्युत्तरवृद्धिः पूर्वस्य वा । आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम् । आनैश्वर्यम्, अनैश्वर्यम् । आविदूर्यम् । आपिशुन्यम् । आनृशंस्यम् ॥

## यथातथयथापुरयोः पर्यायेण (७. ३. ३१)

नञ्पूर्वयोरेतयोः पूर्वपदस्योत्तरपदस्य वा पर्यायेण वृद्धिः स्यात् । आयथातथ्यम्, अयाथातथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । 'सवर्णानुकूलपरिमण्डलविश्वरूपत्विगुदासीनेश्वरप्रतिभूसाक्षिमानुपालिकनास्तिकेतिहयुगपत्पूर्वापरोत्तराधरादिभ्यश्च' (सू० ५-१-१५९) ।

---

१. 'व्यनिख' M. C. S. पाठः

२. 'स्वर्वेनमदयुवभ्यो' इति मुद्रितपाठः

साधर्म्यम् । आनुकूल्यम् । पारिमाण्डल्यम् । अनुशतिकादिः । वैश्वरूप्यम् । आर्त्विज्यं औदासीन्यम् । ऐश्वर्यम् । शौतिभाव्यम् । अनुशतिकादिः । साक्ष्यम् । मानुष्यम् । आस्तिक्यम् । नास्तिक्यम् । ऐतिह्यम् । यौगपद्यम् । पौर्वापर्यम् । औत्तराधर्यम् । आयुक्ते पारिशेष्यम् । वैधर्म्यम् । ऐकैक्यम् । एकैकश इत्यव्ययत्वाट्टिलोपः । औणहत्यम् । धाभातोः क्वनिपि धीवा, धैवत्यम् । द्वयोर्दाण्डिन्यायुक्तया तस्य तत्वम् ॥

'चातुर्वर्ण्यचातुराश्रम्यचातुर्वैद्यत्रैवर्ण्यत्रैकोक्यत्रैकाल्यत्रैशब्द्यत्रैस्वर्यषाड्गुण्यसैन्यसान्निध्यसामीप्यौपम्यसौख्यसार्ववैद्यादीनां स्वार्थे (स० ५-१-१६०)। चत्वारो वर्णा एव चातुर्वर्ण्यम् । चतस्रो विद्या एव चातुर्वैद्यम् । सर्वे वेदा एव सार्ववैद्यम् । अनुशतिकादी । माधवस्तु 'चतुर्वेदः सर्ववेदश्च तदध्येता, स एव चातुर्वैद्यः सार्ववैद्यश्च' इत्याह । सेनैव सैन्यम् । उपमैवौपम्यम् । आयुक्तेर्माणिक एव माणिक्यम् । अलस एवालस्यः । विडेव वैश्यः । करुणैव कारुण्यम् । समानः साधारणः स एव सामान्यः । तदर्थ एव तादर्थ्यः । कविः शुक्रः, स एव काव्यः । 'परम्परेति रूढिसिद्धा, सैव पारम्पर्यं' इति हरः । इति पादावधिभावकर्माधिकारः ॥

स्तेनाद्यन्नलोपश्च (५. १. १२५)

स्तेयम् । 'स्तेनात्' इति विभज्य ष्यञि कृते स्तैन्यम् ॥

सख्युर्यः (५. १. १२६)

सख्यम् । 'वीर्वीयौं च' इति स्वरसूत्रोक्तेर्यं वीर्यमपीति स्वामी । 'दूतवणिग्भ्यां च वाच्यम्' । दूत्यं वणिज्यम् । 'स्वभावात् स्त्रीत्वेन वणिज्या' इति माधवः । 'आभ्यां ष्यञ्च' इति भोजः । दौत्यं, वाणिज्यम्

कपिज्ञात्योर्ढक् (५. १. १२७)

---

१. 'औत्तराधर्यम्' M. U. S. पाठः २. 'विद्यादाद्य' क. ख. M. U. S. पाठः. ३. 'ष्यस् । क्व' ग. पाठः,

कापेयम् । ज्ञातेयम् ॥

पत्यन्तपुरोहितादिभ्यो यक् (५. १. १२८)

सैनापत्यम् । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि' इति सपत्नी-शब्दस्यापि ग्रहे 'भस्याढे—' (वा ६-३-३५) इति पुंवत्त्वात् सापत्यम् । न्यासमते पुंवत्त्वाभावात् सापत्न्यम् । *'पुरोहितसूचकराजनसराजसा-रथ्यादिभ्यः' (सू० ५-१-१६१)। पौरोहित्यम् । सौचक्यम् । राज्यम् । साराज्यम् । सारथ्यम् । 'राज्यं ब्राह्मणादिष्वपि' इति माधवः ॥

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् (५. १. १२९)

प्राणिजातेः— आश्वम् । औष्ट्रम् । मनुष्यस्यापत्ययलोपः, मानुषम् । मानुष्यं तु मानुषात् ष्यञ्युक्तम् । वयोवचनात् कौमारम् । कैशोरम् । 'उद्गात्रुन्नेतृप्रतिहर्तृकर्तृहोतृप्रशास्त्रध्वर्युवभ्रूसुहृद्दुर्हृद्रथगण-कपालिगणकेभ्यः' (सू० ५-१-१६६) । औद्गात्रम् । औन्नेत्रम् । प्रातिहर्त्रम् । कार्त्रम् । हौत्रम् । प्राशास्त्रम् । आध्वर्यवम् । बाभ्रवम् । सौहृदम् । दौर्हृदम् । राथगणकम् । पालिगणकम् । भर्तृत्वं भार्त्रमित्यपि माधवः ॥

हायनान्तयुवादिभ्योऽण् (५. १. १३०)

द्विहायनत्वं द्वैहायनम् । 'युवस्थविरभ्रातृयजमानमिथुनपिशुन-निपुणकुशलचपलकुलीनानृशंसेभ्यः' । (सू० ५-१-१६७) यौवनम् । स्थाविरम् । भ्रात्रम् । कौलीनम् । आनृशंसम् । 'सहः श्रवणकुतुककुतूहलवृषलकन्दुककमण्डलुकितवपोतृक्षेत्रज्ञपरिव्राजकब्रह्म-चारिभ्यश्च' (सू० ४-१-१६८) । सहसः कर्म साहसम् । श्रावणम् । कौतुकम् । कौतूहलम् । वार्षलम् । कान्दुकम् । गण्डुकेति पाठे गाण्डुकम् । गण्डुकः कन्दुक एव । कामण्डलवम् । कैतवम् । पोतुः पविता, पौतवम् । क्षैत्रज्ञम्

१. 'द्वे कि' क. पाठः. २. 'त्रि ॥' क. पाठः. ३. 'श्रावण' अ. ए. ङ. पाठः.

* पुरोहितवर्धिकग्रामिकचर्मिकधार्मिकशिलिकसूचिकसूचकशाण्डिकदण्डिकाञ्जलिकाज-लिकप्रतिकच्छत्रकराजन्पुरस्कसारथिभ्यो यक् इति मुद्रितपाठः.

पारिव्राजकम् । सब्रह्मचारिणष्टिलोपः । साब्रह्मचारम् । 'सुदुर्भ्यां हृदः' (स० ५-१-१६९) । सौहार्दम् । दौर्हार्दम् । 'हृद्भग—' (७-३-१९) इति द्विवृद्धिः । मित्रशत्रुपर्याययोस्तूत्तरवृद्धिर्न । सौहृदम् । दौर्हृदम् । 'भ्रातुश्च' (स० ५-१-१७०) । सुदुर्भ्यामिव । सौभ्रात्रम् । दौर्भ्रात्रम् । 'कोश्च स्त्रियाः' (स० ५-१-१७१) चात् सुदुर्भ्यां च । कौस्त्रम् । सौस्त्रम् । दौस्त्रम् । 'पुरुषहृदयाभ्यामसमासे' (स० ५-१-१७२) । पौरुषम् । 'हृदयस्य हृल्लेख —' (६-३-५०) इति हृदादेशः । हृदयस्य कर्म हार्दं, स्नेहः । *'श्रोत्रियस्य यलोपश्च' (स० ५-१-१७३) । श्रोत्रियत्वम् । श्रौत्रम् ॥

## इगन्ताच्च लघुपूर्वात् (५-१-१३१)

इगन्ताल्लघूपान्त्यलघुकोऽच्छन्दात् भावकर्मणोरण् । शुचेर्भावः शौचम् । मौनम् । मार्दवम् । 'गौरभोऽस्त्रियामित्युक्तेः तत् पुंस्यपि'[1] । गुरुलघ्वादेरुत्तरपदवृद्धिमाह भोजः । दोषस्य गुरुलाघवम् । कवेः व्यलेवेष्टः । काव्यम् ॥

## योपधाद्गुरूपोत्तमाद्वुञ् (५-१-१३२)

रामणीयकम् । आचार्यकम् । '*सहायाद्वेति वाच्यम्' । साहायकम् । साहाय्यम् । ख्यातो यस्य शब्दभावात् सुभ्रख्यात् ष्यञेव । सौभख्यम् ।

## द्वन्द्वमनोज्ञादिभ्यश्च (५-१-१३३)

वुञ् स्यात् । द्वन्द्वात् शिष्योपाध्याययोर्भावः शैष्योपाध्यायिका । स्वभावस्तु स्त्रीत्वम् । मनोज्ञप्रियरूपकल्याणाढ्यमेधाविच्छान्दच्छान्दसश्रोत्रियचोरधूर्तविश्वदेवयुववृद्धामुष्यकुलावश्यबहुलेभ्यः' (स० ५-१-१७६) मनोज्ञस्य भावो मानोज्ञकम् । प्रैयरूपकम् । काल्याणकम् । आढ्यकम् । मैधावकम् । छात्रकम् । छान्दसकम् । श्रौत्रियकम् । चौरकम् । चौरिकेत्यपि दृष्टम् । धौर्तकम् । वैश्वदेवकम् । यौवनिका । अत्र 'नस्तद्धिते' (६-४-१४४) इति टिलोपः 'प्रकृत्याके ना'[2]

1. 'गौरभो' म. P. H. पाठः. 2. 'श्रे' ख. पाठः.

* 'श्रोत्रियाद् यलोपश्च',

(वा० ६-४-१६३) इति प्रकृतिभावान्न। शार्धकम्। आमुष्यकुलिका। आवश्यकम्। बाहुलकम्। 'कुलामुष्य* रसेभ्यः पुत्रात्' (स० ५-१-१७८)। कौलपुत्रकम्। आमुष्यपुत्रिका। रासपुत्रकम्। 'ग्रामात् कुमारषण्डाभ्यां च' (स० ५-१-१७९)। ग्रामात् पुत्राच्च। ग्रामकुमारस्य कर्म ग्रामकुमारकम्। ग्रामषण्डकम्। ग्रामपुत्रकम्। कौलकमित्यपि माधवः। सत्कुलत्वं च तत्॥

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु (५. १. १३४)

गोत्राच्चरणाच्च श्लाघादौ विवक्षिते भावकर्मणोः वुञ् स्यात्। अत्याकारोऽधिक्षेपः। तदवेत इति तत् प्राप्तस्तदवगतवान् वा। गोत्रात्—गार्गिकया श्लाघते। गार्गिकयाधिक्षिपति। गार्गिकां प्राप्तः। गार्गिकामवगतवान्। एवं मित्रयुगोत्रेण श्लाघते। मैत्रेयिकया श्लाघते। 'केकयमित्रयु—'(७-३-२) इति यादेरियः। चरणो विद्याकृतं नाम। काठिकया श्लाघते। वैयाकरणिकयाधिक्षिपतीत्यादि।

होत्राभ्यश्छः (५. १. १३५)

होत्रा इत्यृत्विग्भेदः। अच्छावाकीयम्। मैत्रावरुणीयम्।

ब्रह्मणस्त्वः (५. १. १३६)

ब्रह्माख्यस्यर्त्विजो भावो ब्रह्मत्वम्। छतलोर्बाधार्थं त्वविधिः।

न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः (५. १. १२१)

नञ्पूर्वात् तत्पुरुषादिमनिजादयो भावप्रत्यया न स्युः। तस्मात् अपतित्वमपतितेत्यत्र पत्यन्ताद् यक् न। चतुरसङ्गतादेस्तु नञि यथार्हं स्यादेव। तेन ष्यञ्। आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आयुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्। तत्पुरुषादित्युक्तेर्बहुव्रीहौ ष्यञादिः स्यात्। आनृण्यम् इति। भोजोक्तोऽनुशतिकादिरत्रोच्यते। 'अनोः शतिकहोडसंवरणहरत्संवत्सराणाम्।' (स० ७-१-३४)। शतेन क्रीतं शतिकं वस्त्रादि, तेनानुगतोऽ-

* 'नरोभ्यः' इति म. ए. ह. पाठः। १. 'पुत्र' इति सुदितसिद्धान्तकौमुदीपाठः।
२. 'ष्यञ् श्री' ख. पाठः।

नुशतिका:, तस्येदमानुशातिकम् । अनुहोडेन चरत्यानुहौडिकः । अनुसंचरणे देयमानुसौंचरणिकम् । एवमानुसांवत्सरिकम् । 'कुरोः कतपाञ्चालयोः' (स० ७-१-३५) कौरुकतस्य पुत्रः कौरुकात्यः । गर्गादिः । कुरुपाञ्चालेषु भवः कौरुपाञ्चालः । 'अथेर्देवभूतयोः' (स० ७-१-३६)। 'इहपराभ्यां लोकस्य' (स० ७-१-३७)। 'सर्वाद् भूमिपुरुषयोश्च' (स० ७-१-३८) चकाराल्लोकस्य च। 'अस्याद्धत्य-हेत्योः' (स० ७-१-३९) । अस्यहत्यशब्ददानव्याय आस्यहात्यः । विमुक्तादिः । अस्य हेतिः प्रयोजनमस्येत्यास्यहैतिकः । निपातनादलुक् । 'वध्योगप्रयोगाभिगमाङ्गारवेणुपरस्त्रीपुष्करसद्रुदकशुद्ध-सूत्रनडचतुर्विद्यासिहत्याशतकुम्भसुखशयनादीनां च' (स० ७-१-४०) वध्योगपौत्रो वाध्यौगः । विदादिः । अपत्यानि आङ्गारवैणवः । अत इञि औदकशौद्धिः । सौत्रनाडिश्च । आयुक्तेः ''पुरीषाजातशाश्वतीम्' इति माधवोक्तानुशतिकादित्वं व्याख्यातम् । 'राजपुरुषपरिमण्डलप्रतिभूतर्ववेदानां ष्यञि' (स० ७-१-४१) इति च । द्वारादिस्तु—

> श्रियं सौवीं सौपीमिव वहसि सौवादुमृदवीं
> गतिं धत्से च त्वं वचारी विसरत्सौवरगुणे ।
> द्विजान् नित्यं सौवस्तिकयसि च शौवस्तिकपरः
> सत्ति स्वस्त्यन्येषां नृवर! चरितं शौवनमिव ॥"

इति ॥

धान्यानां भवने क्षेत्रे खञ् (५. २. १)

धान्येभ्यस्तस्य भवनं क्षेत्रमित्यर्थे खञ् स्यात् । [illegible] मिति भवनम् । मौद्गीनं क्षेत्रम् ।

व्रीहिशाल्योर्ढक् (५. २. २)

नैवेयं क्षेत्रम्। शालेयम्॥

यवयवकषष्टिकाद्यत् (५. २. ३)

यव एव यवकः। अज्ञातादित्यन्ये। यव्यं क्षेत्रम्। यवक्यम्। षष्टिक्यम्॥

विभाषा तिलमाषोमाभङ्गाणुभ्यः (५. २. ४)

एभ्यो वा यत्। तिल्यम्। खञि तैलीनम्। माष्यं, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यं, भाङ्गीनम्। अणव्यम्, आणवीनम्॥

सर्वचर्मणः कृतः खखञौ (५. २. ५)

अस्मात् तेन कृते खखञौ स्तः। सर्वचर्मणा कृतः सर्वचर्मीणः कुम्भः। सार्वचर्मीणः॥

यथामुखसम्मुखस्य दर्शनः खः (५. २. ६)

आभ्यां तस्य दर्शनमित्यर्थे खः। मुखसदृशं दृश्यतेऽस्मिन्निति यथामुखीन आदर्शः। सम्यङ्मुखं दृश्यतेऽस्मिन्निति सम्मुखीनोऽभिमुखः। यथास्थितं मुखं दृश्यतेऽस्मिन्निति यथामुखीनोऽपि। अभिमुख इति भट्टिः। 'मानेन तल्पेष्वयथामुखीनान्' इति।

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति (५. २. ७)

सर्वादिभ्य एभ्यस्तद्व्याप्नोतीत्यर्थे खः। सर्वपथं व्याप्नोतीति सर्वपथीना सेना। सर्वाङ्गीणस्तापः। सर्वकर्मीणा शिक्षा। सर्वपत्रीणः सारथिः, रथः अश्वो वा। सर्वपात्रीणम् अन्नं दानं वा।

आप्रपदं प्राप्नोति (५. २. ८)

अस्मिन्नर्थे खः। अभिविधावाङ्। आप्रपदीनं वासः। सर्वाङ्गाच्छादनक्षममाङ्गमप्युच्यते॥

---

१. 'क्यम्। य' घ. पाठः. २. 'नः भाव' ङ. पाठः. ३. 'मुखीनान्' M. U. S. पाठः.

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु (५. २. ९)

अनुपदादेः क्रमाद् बद्धेत्याद्यर्थे खः । अनुपदं बद्धा अनुपदीना उपानत् । पदायामानुगुणं योजितेत्यर्थः । सर्वविधमन्नं भक्षयन् सर्वान्नीनोऽतिथिः । अयानयो नाम शाराणां गतिभेदः, तं नेतव्य अयानयीनः शारः । प्रथमसन्निवेशित इत्यर्थः ॥

परोवरपरम्परपुत्रपौत्रमनुभवति (५. २. १०)

परानवरांश्चानुभवन्ती परोवरीणा स्त्री । ओत्वं निपात्यम् । परान् परतरांश्चानुभवन् परम्परीणो मन्त्री । परम्परभावो निपात्यः । पुत्रपौत्रीणो वृद्धः ॥

अवारपारात्यन्तानुकामं गामी (५. २. ११)

एभ्यस्तद्गामीति खः । अर्वाक् तीरमवारं, परं तीरं पारं तदुभयं गमिष्यन्नवारपारीणः । 'व्यस्तात् विपर्यस्तादपि' । अवारीणः, पारीणः, पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । यथेष्टं गन्ता अनुकामीनः ॥

समांसमां विजायते (५. २. १२)

समायां समायामिति शब्दस्य यलोपो निपात्यः । तस्मात् प्रसूत इत्यर्थे खः । समांसमीना गौः । अत्र पूर्वपदस्यालुग्वाच्यः । तेन समासिद्धि विभक्त्यंशाश्रुतिः ॥

अद्यश्वीनावष्टब्धे (५. २. १३)

अवष्टब्धमासन्नम् । आसन्ने विजनने योग्ये अद्यश्वीना गौः । आसन्नमात्रेऽपि । अद्यश्वीनः सङ्गमः ॥

आगवीनः (५. २. १४)

---

१. 'आसन्न' इति सिद्धान्तकौमुदीपाठः । २. 'उरसम्' इति सिद्धान्तकौमुदीपाठः । ३. '...' ... पाठः । ४. '...' ... पाठः ।

आ गोश्वत्यर्पणात् कर्म कुर्वन् भृत्य आगवीनः । गोदोहनमस्य वेतनमित्यर्थः ॥

अनुग्वलंगामी (५. २. १५)

अनुगुशब्दादस्मिन्नर्थे खः । गोः पश्चादत्यन्तं गच्छन्ननुगवीनः ॥

अध्वनो यत्खौ (५. २. १६)

अध्वानमलं गच्छन् अध्वन्यः, अध्वनीनः। 'ये चाभावकर्मणोः' (६. ४. १६८)। 'आत्माध्वानौ खे' (६-४-१६९) इति द्वयोः प्रकृतिभावः॥

अभ्यमित्राच्छ च (५. २. १७)

अभ्यमित्रमलं गामीत्यर्थे यत्खौ छ च स्मृताः ।
अभ्यमित्र्योऽभ्यमित्रीणोऽप्यभ्यमित्रीय इत्यपि ॥

गोष्ठात्खञ् भूतपूर्वे (५. २. १८)

गोष्ठत्वेन भूतपूर्वो देशो गौष्ठीनः ॥

अश्वस्यैकाहगमः (५. २. १९)

अत्र खञ् । अश्वस्यैकाहेन गम्य आश्वीनः पन्थाः ॥

शालीनकौपीने अधृष्टाकार्ययोः (५. २. २०)

शालां प्रवेष्टुमर्हः शालीनो लज्जितः । प्रच्छाद्यं हि वस्तु कूपप्रक्षेपमर्हतीत्यकर्यं प्रच्छाद्यत्वात् कौपीनम् । प्रच्छाद्यत्वसाम्याल्लिङ्गेऽपि । तदाच्छादने च लक्षणया ॥

व्रातेन जीवति (५. २. २१)

अत्र खञ् ।
भाराद्यैर्जीवतां सङ्घो व्रातस्तत्कर्म खल्विह ।
व्रातं स्यात् तेन जीवन्तो व्रातीना वाहकादयः ॥

साप्तपदीनं सख्यम् (५. २. २२)

सप्तभिः पदन्यासैर्वचनैर्वा प्राप्यं साप्तपदीनं सख्यम् । साप्तपदीनः सखेत्यपि लक्षणया ॥

हैयङ्गवीनं संज्ञायाम् (५. २. २३)

ह्यो गोदोहजन्यनवनीतस्याख्या ।

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ (५. २. २४)

क्रमाद्योज्यम् । 'न मुम्चुचणचरजाहटीटपट्गवकाम्येषु' स० १-२-१६) इति जाहचो जस्येत्वं न । पीलोः पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् । 'पीलुकर्कन्धूशमीकरीरकुवलकवलाश्वत्थखदिरेभ्यः' (स० ५-२-२६) । 'कर्णाक्षिनखमुखकेशपादगुल्फभ्रूशृङ्गदन्तोष्ठपुष्पेभ्यः' (स० ५. २. ५७)॥

पक्षात्तिः (५. २. २५)

पक्षान्मूले तिः । पक्षतिः प्रतिपद्, गरुन्मूलं वा ॥

तेन वित्तश्चुञ्चुप्चणपौ (५. २. २६)

तेन प्रसिद्ध इत्यर्थ एतौ स्तः । विद्याचुञ्चुः । विद्याचणः ॥

विनञ्भ्यां नानाञौ नसह (५. २. २७)

नसहेत्यर्थवाचिभ्यां विनञ्भ्यां स्वार्थिकौ क्रमात् ।
नानाञौ स्तो नाञि वृद्धिर्विना नानेति सिध्यति ॥
संख्यादिहीननिपातार्थवृत्तित्वादनयोः सामान्योक्ता सुविभक्तिरेव ॥

तद्धितश्चासर्वविभक्तिः (१. १. ३८)

सर्वविभक्तिरहितस्तद्धितान्तोऽव्ययसंज्ञः, इति सुलुक् । विना नाना ॥

---

१ 'ह्योहनर' क. पाठः. २ 'चौ । न' ग. पाठः. ३ 'ति शु' ख. M. U. S. पाठः.

## वेः शालच्छङ्कटचौ (५. २. २८)

विस्तृतार्थाद्वेः स्वार्थे एतौ स्तः । विशालम् विशङ्कटम् ॥

## सम्प्रोदश्च कटच् (५. २. २९)

संबाधप्रकाशाधिकार्थेभ्यश्च संप्रोद्भ्यो वेश्च स्वार्थे कटच् स्यात् । सङ्कटम् । प्रकटम् । उत्कटम् । विकटम् । 'नेः समीपे' (स० ५-२-३६) इति भोजः । निकटम् । 'अलाबूतिलोमाभङ्गादिभ्यो रजसीष्टम्' (वा०)। अलाबूनां रजः अलाबूकटमित्यादि । 'पेशुनामभ्यस्थाने गोष्ठद्वाच्यः' (वा०)। गोगोष्ठम् । महिषीगोष्ठम् । '[3]अवेः सङ्घाते कटच्' । 'निस्तारे पटच्' । अवीनां सङ्घातोऽविकटः । तेषां विस्तारेण स्थितिरविपटः । 'द्वित्वे गोयुगच्' । 'षट्त्वे षड्गवच्' । इयं पशुनामस्य एव । उष्ट्रगोयुगम् । हस्तिषड्गवम्' । 'स्नेहे तैलच्' । इङ्गुदीतैलम् । तिलतैलम् । 'भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ' । इक्षुशाकटम्' । इक्षुशाकिनम् । एवं मूलकजीरकशाकादिभ्यः । स्वामी तु भवने क्षेत्रे सर्वेभ्य एतौ मन्यते ॥

## अवात्कुटारच्च (५. २. ३०)

चकारात् कटच् । अवकुटारम् अवकटम् । एतावनवनते प्रसिद्धे वेति हरः ॥

## नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः (५. २. ३१)

नासिकानमने वाच्ये नान्स्यवादेते स्युः । अवटीटम् अवनाटम् अवभ्रटं च नासिकानमनम् । तद्योगादवटीटा नासिका, अवटीटः, पुरुषः । एवमपकृष्टवस्तुनि दृष्टे लुञ्जनमनात् तदप्यवटीटादिवाच्यम् इति न्यासः ॥

---

१. 'रजस्युपसङ्ख्यानम्' इति मुद्रितसिद्धान्तकौमुदीपाठः. २. 'गोष्ठजादयः स्थानादिषु पशुनामभ्यः', ३. 'सङ्घाते कटच्' इति मुद्रितसिद्धान्तकौमुदीपाठः. ४. 'वच ।' ग. पाठः. ५. 'शाल्यादिभ्यः' अ. उ. ह. पाठः. ६. 'प्रसिद्ध्यौ इति हर.' अ. उ. ह. पाठः.

नेर्बिडज्बिरीसचौ (५. २. ३२)

नेर्नीरन्ध्रार्थे एतौ स्तः । निबिडं निबिरीसम् ॥

इनच् पिटच्चिकचि च (५. २. ३३)

नेर्नते वाच्ये इनच्पिटच्प्रत्ययौ क्रमात्, चिक चि इत्यादेशौ च स्तः। चिक्किनम् चिपिटम्। 'कप्रत्ययश्चिकभावश्च वाच्यः'। चिकः।

एतत्खण्डद्वयं वृत्तौ व्याख्यातं नासिकानते।
मया भोजानुसाराच्च प्रयोगाच्चैवमीरितम् ॥

क्लिन्नचक्षुषि वाच्ये लः स्याच्चिल्पिल्चुलोऽस्य चादेशाः।
स्यात् क्लिन्नमक्षि चिल्लं पिल्लं चुल्लं तथैव तद्वांश्च ॥

उपाधिभ्यां त्यकन्नासन्नारूढयोः (५. २. ३४)

अधऊर्ध्वभागयोर्वाच्ययोराभ्यां त्यकन्। उपत्यका अधित्यका च गिरेः। 'त्यकनश्च निषेधः' इति कात्पूर्वस्येत्वाभावः। समुद्रोपत्यका लङ्केत्यासन्नभूमात्रे प्राह भट्टिः ॥

कर्मणि घटोऽठच् (५. २. ३४)

कर्मणि घटमान इत्यर्थेऽठच् स्यात्। कर्मठः।

तदस्य सञ्जातं तारकादिभ्य इतच् (५. २. ३६)

तारकितं नभः। पुष्पिताः केशाः। 'तारकापुष्पमञ्जरीमुकुलकुड्मलकुसुमकोरकाङ्कुरहस्तकस्तबकपल्लवकिसलयेभ्य इतच्' (स० ५-२-५३)। 'कण्टकपुलकरोमाञ्चदर्पोत्कर्षगर्वोत्कण्ठाकल्लोलतरङ्गाङ्गारकन्दर्पान्धकारेभ्यः' (स० ५-२-५४)। कन्दलशैवलकुवलयकुड्मलकलङ्ककज्जलकर्दमसीमन्ताभ्ररागवेगर्जीषेभ्यः।' (स० ५-२-५५)। 'क्षुत्तृड्बुभुक्षापिपासानिद्रातन्द्राज्वरगरव्याधिव्रणसुखदुःखेभ्यः' (स० ५-२-५६)। 'मूत्रपुरीषप्ररोहदोहशास्त्रपण्डा*मुण्डमुकुरमुद्रागर्भफलतिल-

१. [illegible] इति मुद्रित[illegible]पाठः। २. 'गिरेः [illegible]' [illegible] पाठः। ३. [illegible] पाठः। ४. [illegible] पाठः।

* मुण्डेति पदं मुद्रित[illegible] न दृश्यते।

कचन्द्रकादिभ्यश्च'[1] (स० ५. २. ५७) । पण्डा ज्ञानं गर्धो लोभः । आशुक्तेर्मूर्च्छितलज्जितप्रतिबिम्बितभरितादि । 'गर्भादप्राणिनि' (ग० सू०) । गर्भितो व्रीहिः । प्राणिनि तु गर्भिणी गौः ।

प्रमाणे द्वयसज्दघ्नञ्मात्रचः (५. २. ३७)

तदस्य प्रमाणमित्यर्थ एते स्युः ।
ऊर्ध्वतो मान एवाद्यौ द्वौ नाभिद्वयसं जलम् ।
सौधदघ्नस्तरुर्मात्रच् सर्वमानेष्वपीष्यते ॥
ऊरोमात्रं जलं व्रीहिः प्रस्थमात्र इतीदृशम् ।
स्वतः प्रमाणभूतेभ्यो मात्रचो वा लुगिष्यते ॥
अरत्निमात्रश्चारत्निः पटो हस्तादिष्वप्यताम् ।
द्विगोर्द्वयसजादीनां नित्यमेव लुगिष्यते ॥
तेन द्विपूरुषं तोयं द्व्यरत्निः पट इत्यपि ।
प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये ॥
मात्रज् वक्तव्य इत्युक्तेर्हस्तमात्रो ध्रुवं पटः ।
प्रस्थमात्रो घटो नूनं दशमात्रा इमे नराः ॥
यत्वन्ताद्बहुले स्वार्थे द्वयसज्मात्रचौ मतौ ।
तावन्मात्रं तथा तावद्द्वयसं तावदेव हि ॥

'स्तोमे डो डट् च वाच्यः' । पञ्चदश मन्त्राः प्रमाणमस्येति पञ्चदशः स्तोमः । पञ्चदशा स्तुतिः । डटि पञ्चदशी । 'शन्शदन्ताद्विंशतेश्च डिनिर्वाच्यः' । पञ्चदशतिथिप्रमिताः पञ्चदशिनः पक्षाः । शदन्तात् त्रिंशिनो मासाः । विंशतिसर्गप्रमितं विंशि माघकाव्यम् । विंशतेस्तिलोपे कृते पुनर्यस्येति लोपः ।

आस्तामित्याडलोपार्थं श्नसोरदिति तैग्रहात् ।
आमोसिद्धेरनित्यत्वं तेनाभीयातुभाविह ॥

---

१. प्रमाणलेभ्यो' क. ख. पाठः. २. 'शन्शतोर्डिनिश्छन्दसि तदस्य परिमाण-' मित्यर्थे वाच्यः' 'विंशतेश्च वाच्यम्' इति मुद्रितसिद्धान्तकौमुदीपाठः. ३. 'तद्ग्रहात्' क. ख. पाठः. ४. 'सादौरे' ख. पाठः.

पुरुषहस्तिभ्यामण् च (५. २. ३८)

आभ्यां प्रमाणेऽण् पूर्वोक्ताश्च स्युः। पौरुषम्। हास्तिनम्। इनणीति प्रकृतिभावः। पुरुषद्वयसमित्याद्यपि॥

यत्तदेतेभ्यः परिमाणे वतुप् (५. २. ३९)

एभ्यस्तदस्य परिमाणमित्यर्थे वतुप् स्यात्। दृग्दृशवतुष्विल्यात्वम्। यावान्। तावान्। एतावान्।

किमिदंभ्यां वो घः (५. २. ४०)

आभ्यां वतुप्, वतुपो वकारमात्रस्य घकारश्च स्यात्। घस्य इय्। किम् इयत् इदम् इयत्। 'इदंकिमोरीश्की' (६-३-९०)। की इयत् ई इयत्। यस्येति लोपः। कियत् इयत्। पदकार्यम्। कियान् इयान्।

किमः सङ्ख्यापरिमाणे डति च (५. २. ४१)

संख्येयत्वाप्रश्ने किमो डतिः पूर्वोक्तं च स्यात्। 'डतिर्बहुत्व एवेष्टः' (वा०)। डित्वाट्टिलोपः। कति बालाः कियन्तः। यत्तद्भ्यां च डतिरिति कौमुदी। यति। तति।

संख्याया अवयवे तयप् (५. २. ४२)

सोऽस्या अवयव इत्यर्थे संख्यायास्तयप् स्यात्। चतुरवयवा चतुष्टयी रज्जुः। गवां चतुष्टयमित्यादौ चतुरवयवः सङ्घोऽर्थः।

द्वित्रिभ्यां तयस्यायज्वा (५. २. ४३)

आभ्यां तयपोऽयजादेशो वा स्यात्। द्वयम्। द्वितयम्। त्रयं त्रितयम्॥

उभादुदात्तो नित्यम् (५. २. ४४)

उभशब्दात् संख्यार्थाज्जातस्य तयप आद्युदात्तो नित्यमयप् स्यात्। उभयम्॥

तदस्मिन्नधिकमिति दशान्ताड्डः (५. २. ४५)

डित्वाट्टिलोपः द्वादशाधिका अस्मिन्निति द्वादशं शतं सहस्रं वा। 'शतसहस्रयोरेवेष्टम्' (वा०) ॥

शदन्तविंशतेश्च (५. २. ४६)

शदन्तेभ्यो विंशतेश्चोक्तार्थे डः। त्रिंशदधिका अस्मिन्निति त्रिंशं शतम्। तिलोपः, विंशं शतम्। 'संख्यापूर्वाच्चेष्टम्'। द्वात्रिंशं द्वाविंशं वा शतम्।

संख्याया गुणस्य निमाने मयट् (५. २. ४७)

गुणो भागः। निमानं मूल्यं क्रेयं वा। एकस्य भागस्य मूल्ये क्रेये वा वर्तमानाया द्व्यादिसंख्यायास्तदस्येत्यर्थे मयट् स्यात्।

यद्भागस्य यवानां द्वौ भागौ मूल्यतया स्थितौ।
तस्याधवानां द्विमयं तक्रं क्रेये स्वथोच्यते॥
यद्भागस्य हि तक्रांशौ द्वौ क्रेतव्यतया स्थितौ।
तक्रस्य द्विमयास्तेऽमी यवा इति विपर्ययः॥

पूर्वत्रैकप्रस्थस्य तक्रभागस्य द्वौ यवप्रस्थौ मूल्यमित्यर्थः, परत्रैकप्रस्थस्य यवभागस्य द्वौ तक्रप्रस्थौ क्रेतव्यावित्यर्थः।

तस्य पूरणे डट् (५. २. ४८)

अत्रार्थे सङ्ख्यायाः डट्। विंशतेः पूरको विंशः। त्रिंशः॥

नान्तादसङ्ख्यादेर्मट् (५. २. ४९)

असङ्ख्यादेर्नान्तसङ्ख्यायाः परस्य डटो मडागमः स्यात् पञ्चमः। दशमः। सङ्ख्यादेस्त्वेकादशः॥

षट्कतिकतिपयचतुरां थुक् (५. २. ५१)

१. 'वेष्यते' इति मुद्रितसिद्धान्तकौमुदीपाठः २. 'टिलोपः अ. ५. ३. पाठः. ३. 'एकस्य मूल्ये' क. पाठः. ४. 'अत्रार्थे डः।' अ. ५. ३. पाठः.

एषां डटि परे थुगागमः स्यात् । षष् थ् अ ष्टुत्वं षष्ठः । कतिथः । कतिपयथः स्वल्पसङ्ख्यापूरकः । चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च' (वा०) । तुरीयः । तुर्यः ॥

बहुपूगगणसङ्घस्य तिथुक् (५. २. ५२)

एषां डटि परे तिथुक् स्यात् । बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः । पूगादेरसंङ्ख्यात्वेऽप्यागमोक्त्यैव डट् कल्प्यः ॥

वतोरिथुक् (५. २. ५३)

वत्वन्तस्य डटि इथुक् । तावतिथः ॥

द्वेस्तीयः (५. २. ५४)

द्वितीयः ॥

त्रेः सम्प्रसारणं च (५. २. ५५)

तृतीयः । द्वितीयतृतीयेति सूत्रोक्तेः 'हलः' (६-४-२) इति सम्प्रसारणदीर्घो न ॥

विंशत्यादिभ्यस्तमडन्यतरस्याम् (५. २. ५६)

एभ्यः परस्य डटस्तमडागमो वा स्यात् । विंशतितमः । विंशः ॥

नित्यं शतादिमासार्धमाससंवत्सराच्च (५. २. ५७)

शतादिसङ्ख्याभ्यो मासादिभ्यश्च डटो नित्यं तमट् । शततमः । सहस्रतमः । मासतमः । अर्धमासतमः । संवत्सरतमः । तदन्त्यो दिवस इत्यर्थः ॥

षष्ट्यादेश्चासङ्ख्यादेः (५. २. ५८)

असङ्ख्यापूर्वात् षष्ट्यादेः डटो नित्यं तमट् । षष्टितमः । सप्ततितमः । सङ्ख्यादेस्त्वेकषष्टः । एकषष्टितम इति विंशत्याद्युक्तो विकल्पः ॥

मतौ छः सूक्तसाम्नोः (५. २. ५९)

तयोर्वाच्ययोर्मत्वर्थे छः । कयाशुभाशब्दोऽस्मिन्नस्तीति कयाशुभीयं सूक्तम् । यज्ञायज्ञीयं साम । अनयोर्वेदशब्दानुकरणरूपत्वेन ततोऽन्यत्वाच्छृद्रादिभिरश्राव्यत्वं नेति हरः । अनुकरणत्वादेव पदांशोक्तावपि नापशब्दत्वम् । अस्यवामीयं सूक्तम् ॥

अध्यायानुवाकयोर्लुक् (५. २. ६०)

अनयोर्वाच्ययोर्मत्वर्थे छस्तस्य लुक् च स्यात् । लुग्वा वाच्यः । तत्राध्यायो लौकिकग्रन्थगतोऽप्युक्त इति हरः । दोषविज्ञानीयो वाहटशास्त्रेऽध्यायः । दोषविज्ञानो वा ॥

दोषविज्ञानशब्दे हि साक्षाच्चास्मिन्नसत्यपि ।
अर्थाद् तद्वर्णनाध्याये तदस्तित्वात्तदाख्यता ॥

अनुवाके तु यूयंपातशब्दवन्तो यूयंपातीया अनुवाकाः । यूयंपाताः ॥

विमुक्तादिभ्योऽण् (५. २. ६१)

विमुक्तशब्दवानध्यायोऽनुवाको वा वैमुक्तः । औवेशो भारतेऽध्यायः ॥

गोषदादिभ्यो वुन् (५. २. ६२)

गोषदशब्दवानध्यायोऽनुवाको वा गोषदकः[2] । इषेत्वकः ॥

तत्र कुशलः पथः (५. २. ६३)

पथोऽस्मिन्नर्थे वुन् । नान्तत्वाट्टिलोपः । पथकः ॥

आकर्षादिभ्यः कन् (५ २. ६४)

आकर्षे कुशल आकर्षकः । रेफपाठे आकर्षकः । 'आकर्षत्सरुपिशाचपिचण्डनिचयाश्माशालिशकुनिजपतपदादह्लादपादेभ्यः' (सं० ५-२-९१) । त्सरुप्रभृतौ तद्विषयक्रियायां कुशलत्वमूह्यम् ॥

---

१. 'मत्वर्थे' क. ग. M. U. S. पाठः. २. 'गोषदशब्द' M. U. S. पाठः.
३. 'आकर्षादिभ्यः' इति मुद्रितसिद्धान्तकौमुदीपाठः. ४. 'आकर्षत्सरु' M. U. S. पाठः.

धनहिरण्यात् कामे (५. २. ६५)

आभ्यां तत्र काम इत्यर्थे कन् । धने कामोऽस्य धनकः । हिरण्यकः ॥

स्वाङ्गेभ्यः प्रसिते (५. २. ६६)

एभ्यस्तत्रासक्ते कन् । केशशिक्षापरः केशकः । दन्तकः । दन्तोष्ठकः ॥

उदराट्ठगाद्यूने (५. २. ६७)

तस्मात् तत्रासक्तेऽर्थे निरुद्योगे वाच्ये ठक् । उदरपूरणेऽत्यन्तासक्त्या निरुद्योग औदरिकः । तथापि सोद्योगश्चेदुदरकः ॥

सस्येन परिजातः (५. २. ६८)

गुणार्थात् सस्यशब्दात् तेन परिवृतो जात इत्यर्थे कन् । जन्मन्येव सर्वगुणैर्वृतः सस्यकः पुत्रः । सस्यको मणिः । शस्येनेति हरपाठेऽपि प्राग्वदर्थः ॥

अंशं हारी (५. २. ६९)

अंशात् तं हारीत्यर्थे कन् । अवश्यं हर्ता हारी । अंशकोऽयं पुत्रः ॥

तन्त्रादचिरापहृते (५. २. ७०)

कन् स्यात् । तन्तुवानार्था शलाका तन्त्रम् । तस्मादचिरापहृतस्तन्त्रको नवपटः ॥

ब्राह्मणकोष्णिके संज्ञायाम् (५. २. ७१)

यस्मिन् देशे ब्राह्मणास्तु भवन्त्यायुधजीविनः ।
सोऽयं ब्राह्मणकोऽल्पान्ना यवागूरुष्णिकोच्यते ॥

शीतोष्णाभ्यां कारिणि (५. २. ७२)

क्रियाविशेषणाभ्यां मान्द्यपाटवपराभ्यामाभ्यां कारिण्यर्थे कन्। शीतं कुर्वन् शीतको मन्दः। उष्णकः पटुः॥

अधिकम् (५. २. ७३)

कनन्तोऽयम् ॥

अनुकाभिकाभीकः कमिता (५. २. ७४)

एते कामुकार्थाः ॥

पार्श्वेनान्विच्छति (५. २. ७५)

पार्श्वास्थिवत् कुटिल उपायः पार्श्वम् । तेनार्थानन्विच्छन् पार्श्वको मन्त्री ॥

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ (५. २. ७६)

क्रमात् स्तः। तीक्ष्णोपायोऽयःशूलम् । तेनान्विच्छन् आयःशूलिकः। दण्डाजिनं दम्भः। तेनान्विच्छन् दाण्डाजिनिकः॥

तावतिथं ग्रहणमिति लुग्वा (५. २. ७७)

पूरणान्तात् तावत्सङ्ख्यापूरणं ग्रहणसाधनमित्यर्थे कन्। पूरणप्रत्ययस्य च वा लुक् स्यात्। 'ग्रन्थग्रहण एवेष्टम्' (वा०)। पञ्चमं ग्रहणसाधनं पञ्चकं पञ्चमकं वा । पाठे पञ्चममावर्तनमित्यर्थः। 'तावतिथेन गृह्णातीत्यर्थे कन् पूरणस्य च नित्यं लुग्वाच्यः' (वा०)। पञ्चमेनावर्तनेन गृह्णन् पञ्चकः द्विकः॥

स एषां ग्रामणीः (५. २. ७८)

स एषां नाथ इत्यर्थे कन्। कृष्णका यदवः। मत्नाथं मत्कम् । त्वत्कम् । प्रायेण तु तस्येदमित्यर्थमात्रे प्रयुञ्जते इति हरः। मत्का वाक् ॥

शृङ्खलमस्य बन्धनं करभे (५. २. ७९)

---

१. 'गृह्णातीति कन् वक्तव्यो नित्यं च लुक्' इति मुद्रितसिद्धान्तकौमुदीपाठः.

उभयतो रज्जुमद् दारुमयं पादबन्धनं शृङ्खलम्। तत् बन्धसाधनमस्येत्यर्थे बालोष्ट्रे वाच्ये कन् शृङ्खलकः करभः॥

उत्क उन्मनाः (५. २. ८०)

कालप्रयोजनाद्रोगे (५. २. ८१)

कालात् प्रयोजनाच्च रोगे वाच्ये कन्। द्वितीयेऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः। 'साक्षात्कालार्थान्यासादेर्नेष्टम्' (वा०)। कारणं कार्यं च प्रयोजनम्। पित्तेन जातः पित्तको ज्वरः। शीतः कार्यमस्येति शीतको ज्वरः। उष्णकः॥

तदस्मिन्नन्नं प्राये संज्ञायाम् (५. २. ८२)

तदन्नमस्मिन्नित्यर्थे प्राये द्योत्ये नाम्नि कन्। गुडापूपाः प्रायेणान्नमस्यामिति गुडापूपिका पौर्णमासी। 'वटकादिनिर्वाच्यः' (वा०)। वटकाख्या अपूपाः प्रायेणान्नमस्यामिति वटकिनी तिथिः॥

कुल्मासादञ् (५. २. ८३)

कुल्मासो माष इति राजः। मुद्ग इति हरः। तत्प्रायान्ना कौल्मासी। तिथिः॥

श्रोत्रियंश्छन्दोऽधीते (५. २. ८४)

छन्दोऽध्येतरि श्रोत्रियन्निति निपात्यते। नित्त्वं स्वरार्थम्। श्रोत्रियः। तदधीते इत्यणि च्छान्दस इत्यपीष्टम्॥

श्राद्धमनेन भुक्तमिनिठनौ (५. २. ८५)

श्राद्धी श्राद्धिकः। तद्दिनभुक्तश्राद्ध एवैतौ॥

पूर्वादिनिः (५. २. ८६)

अस्मादनेनेत्यर्थ इनिः । प्रकरणात् क्रियाविशेषं प्रकल्प्य क्रियाविशेषणानां कर्मत्वाद् द्वितीयान्तात् पूर्वादिनिः कार्यः । पूर्वं कं गतं यानेनेति पूर्वी ॥

सपूर्वाच्च (५. २. ८७)

सपूर्वपदाच्च पूर्वादिनिः । भावे कर्मसामान्ये वा क्तं कृत्वा भुक्तं पूर्वमनेनेति विगृह्य सुप् सुपेति भुक्तपूर्वशब्दस्य समासे कृत इनिः । भुक्तपूर्वी खल्वयम् । अत्र कर्मविशेषस्यानभिहितत्वात् पुनस्तद्विवक्षायां चेत् भुक्तपूर्वी (वा० २. ३. ३६) सक्तूनित्याद्यपि ॥

इष्टादिभ्यश्च (५. २. ८८)

एभ्योऽनेनेत्यर्थे इनिः स्यात् । इष्टी मखे । 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति कर्मणि सप्तमी ॥

इष्टी सर्वमखे श्रुती श्रुतिशते तत्त्वे गृहीत्यर्चिती
गोविन्दे पठिती तथानुपठिती शास्त्रेषु सर्वेष्वपि ।
मन्त्री व्याकुलिती तथा खलजने दूरं निराकृत्यसौ
मित्रेषूपकृती विभाति नृपतिर्दीनेषु संरक्षिती ॥

आम्नाती निगमे ग्रहेषु गणिती धर्मेऽवधारित्यसा-
वाचारे परिरक्षिती निकषिती श्रेयःसु नित्यं नृणाम् ।
न्यायेष्वप्यवकल्पिती परिकलित्युच्चैः कलाकौशले
वेदे सङ्कलिती विराजति सुधीरासेविती केशवे ॥

अधीती वेद इत्यादि चास्ति ॥

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि
(५. २. ८९)

---

१. 'क्रियासम्बन्धः । क्रियाविशेषणं प्रकल्प्य क्रिया' अ. ग. ह. पाठः.
२. 'पूर्वादिनिः । कृतं पूर्वमनेन कृतपूर्वी कटम् ॥ इष्टा', ३. 'दी' ग. पाठः.

इत्यत्र परिपन्थी लोकेऽपीष्टः ॥

## अनुपद्यन्वेष्टा (५. २. ९०)

पदचिह्नं दृष्ट्वान्वेष्टा अनुपदी । तेन हिरण्याद्यन्वेष्टरि न । स्वामी त्वन्वेष्टानुपदी समावित्याह ॥

## साक्षाद् द्रष्टरि संज्ञायाम् (५. २. ९१)

साक्षाद् द्रष्टा साक्षी । अव्ययत्वाट्टिलोपः ॥

## क्षेत्रियच् परक्षेत्रे चिकित्स्यः (५. २. ९२)

धास्मिन्नर्थे चिदेष निपात्यः ।

अन्यजन्मभवे देहे चिकित्स्यः क्षेत्रियो गदः ।
देहान्तरे सङ्क्रमस्य चिकित्स्यं क्षेत्रियं विषम् ॥
अन्यसस्यस्य केदारे विनाश्यं क्षेत्रियं तृणम् ।
परदारेषु गमनाद्धन्तव्यः क्षेत्रियः खलः ॥

## इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा (५. २. ९३)

घजन्तीमिन्द्रियपदमर्थेष्वेषु निपात्यते ।
इन्द्र आत्मा तस्य चिह्नं चक्षुरादिकमिन्द्रियम् ।
तेनानुमानैर्दृष्टं वा सृष्टं वा स्वशुभाशुभैः ॥
ज्ञानार्थं तेन जुष्टं वा विषयेभ्योऽथवार्पितम् ।
इन्द्रदुर्जयमित्याद्यप्यूह्यतामितिशब्दतः ॥
व्युत्पत्तिरुद्धाप्येवं रूढिष्वित्यपि सूच्यते ।

इति खेभ्यादिभागः ।

---

१ 'एरेपि दृष्ट ॥' घ पाठः २. 'पदं धार्थे' घ. पाठः. ३. 'ठमादि' इ घ. भ. प्र. ए ठ पाठः.

तदस्यास्त्यस्मिन्निति मतुप् (५-२-९४)

तदस्यास्तीति तदस्मिन्नस्तीति चार्थे मतुप् स्यात् । गावोऽस्य सन्तीति गोमान् कृष्णः । श्रीवत्सोऽस्मिन्नस्तीति श्रीवत्सवान् । रसावान् । 'मादुपधायाश्च'–(८-२-९) इति अवर्णान्तान्मस्य वत्वम् । मान्तात्वम् । शम्वान् । मोपधात् शमीवान् । अवर्णोपधाद् यशस्वान् भास्वान् । अत्र 'स्वादिषु(१. ४. १७) इति पदत्वेन सस्य रुत्वे प्राप्ते

तसौ मत्वर्थे (१. ४. १९)

मत्वर्थे प्रत्यये परे तान्तसान्तौ भसंज्ञौ इति भत्वादपदत्वम् । यवादिभ्य इत्युक्तेर्यवमानित्यादि ।

यवोर्मिदल्मयो भूमिर्द्राक्षा ध्राक्षा तिमिः क्रिमिः ।
हरित् गरुत् ककुद्दासः कुक्षेत्याद्या यवादयः ॥

ककुद्मान् । 'झयः'(८-२-१०) इति वत्वम् । दृषद्वान् विद्युत्वान् अस्य तान्तत्वेनापदत्वाज्जश्त्वं न । सिद्धलिण्मान्वृक्ष इत्यत्र ढत्वादेरसिद्धत्वान्न वत्वम् । 'संज्ञायाम्'(८. २. ११)इति वत्वम् । हरिवान् इन्द्रः ॥

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती (८. २. १२)

एषु मतुपो नाम्नि वत्वं प्रकृत्यादेशश्च निपात्यते । आसनवत्त्वादासन्दीवान्नाम ग्रामः । अस्थिमत्त्वादष्ठीवान्जानूरुसन्धिः । चक्रवत्त्वाच्चक्रीवान्नाम नृपः । चक्रं सैन्यम् । कक्ष्यावानिति प्राप्ते कक्षीवान्नामर्षिः । लवणवत्तया रुमण्वान् गिरिः । रन्तिदेवकृतगवालम्भजनितचर्मवत्त्वाच्चर्मण्वती नाम नदी ॥

उदन्वानुदधौ च (८. २. १३)

उदकारस्कस्यचिदर्थेर्नाम्नि च ॥

राजन्वान् सौराज्ये (८-२-१४)

सुराजत्वे वाच्ये राजन्वान् देशः । अन्यत्र राजवान् । विद्वस्मतुप् 'तसौ मत्वर्थे'(१. ४. १९) इति भत्वे

वसोः सम्प्रसारणम् (६-४-१३१)

भस्य वंसोः सम्प्रसारणं स्यात्'। आदेशसत्वात् षत्वम् । विष्मान् ग्रामः । 'मतौ बह्वच'(६. ३. ११९) इति नाम्नि दीर्घादमवती ॥

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥
भूमार्थे गुणवान् राजा निन्दार्थे गन्धवाञ्छकः ।
प्रशंसायां रूपवती नित्यत्वे क्षीरवान् द्रुमः ॥
विद्यावानित्यतिशये संसर्गे कुण्डली नरः ।
अस्तित्वे सुगन्धवती तत्सचैव विवक्ष्यते ॥

न कर्मधारयान्मत्वर्थीयो बहुव्रीहेर्लाघवात्' । 'फुल्लपङ्कजा न भूमाद्यर्थव्यक्तये तु फुल्लपङ्कजवतीत्यपि स्यात् । अकृच्छ्रिणीति कर्मधारयादप्युक्तेः लाघवसनाहत्यमेवेति हरः । 'गुणवचनेभ्यो मतुलुग्वाच्यः' (वा०)। शुक्लो गुणोऽस्यास्तीति शुक्लः पटः ॥

## रसादिभ्यश्च (५.२.९५)

एभ्यो मतुबेव । नत्विनिठनादयः । रसवान् रूपवान् स्पर्शवनित्यादि । उर्वशी रूपिणी स्पर्शिको वायुरिति दर्शनात्सूत्रं दूष्यमेवि भाष्यम् ॥

## प्राणिस्थादातो लजन्यतरस्याम् (५.२.९६)

प्राणिस्थादादन्तात्लज्वा । चूडालः चूडावान् । अप्राणिस्थे चूडावान् स्तम्भः । 'प्राण्यङ्गादेवेष्टम्' । तेन शोभावानिच्छावान् नेत्यादौ न । छायालैतनुवल्लरी चूर्डाल शशिलेखयेत्यादौ च्छायालात्याद्च इति 'आतोऽनुपसर्गे कः' (३. २. ३) 'केसरालमित्यलेरणीगमनः'।केसराण्यलति भूषणीकरोतीति कर्मण्यणि केसरालं नलिनम्

## सिध्मादिभ्यश्च (५.२.९७)

एभ्यो लज्मतुप् च स्यात् । नत्विनिठनादि । सिध्मगड्डमा

१. 'संसर्गे' इति मुद्रितपाठेऽस्ति पाठः. 'सम्बन्ध' इति भाष्यपाठः. २. 'विमुक्तेः' ग. रा. ट. पाठः. ३. 'ला', ४. 'ला च' ग. पाठः. ५. 'छाछो इ' इति 'ज्ञानमपाठः.

कर्णपर्णपांसुमांसनाभिपर्शुमज्ञासक्थिहनूदकबीजस्नेहेभ्यः' (स० ५-२-१३३) सिध्मोऽस्यास्तीति सिध्मलः सिध्मवान् मांसलः मांसलः कर्णलः पर्णलः नाभिलः पर्शुलः मज्जालः सक्थिलः हनुलः उदकलः बीजलः स्नेहलः । 'शीतश्यामकृष्णपिङ्गपेशपक्ष्मपृथुमृदुमञ्जुपत्रपुष्कनिष्पावचटुकपिकण्डूभ्यः' (स० ५-२-१३४) । शीतगुणवान् शीतलः । एवं श्यामलः कृष्णलः पिङ्गलः पत्रलः पत्रवान् हरितवर्णवान् । पुष्कलः । निष्पावः कोशी धान्यभेदः निष्पावलः । कपिर्वर्णभेदः कपिलः । कण्डूकः । सक्तुल इति च माधवः । 'पार्ष्णिधमन्योर्दीर्घश्च' (स० ५-२-१३५) पार्ष्णीलः । धमनीलः । 'क्षुद्रजन्तूपतापेभ्यश्च' (स० ५-२-१३२) । आनकुलात् क्षुद्रजन्तवः । तेभ्यो रोगेभ्योऽप्यादन्तेभ्यश्च लच् यूकालः मक्षिकालः विचर्चिकालः मूर्च्छालः । अनादन्तेभ्योऽपीति राजाज्ञा । पित्तलः श्लेष्मलः 'वातदन्तबलगललल्लाटानामूङ्च' (स० ५-२-१३६) । एभ्यो लच् स्यात् लच ऊङ् च । 'यस्येति च' (६. १. १४८) इत्यलोपः वातूलः । दन्तूलः । बलूलः गलूलः ललाटूलः ॥

## वत्सांसाभ्यां कामबले (५.२.९८)

आभ्यां कामवति बलवति च वाच्ये लच् । वत्सलः प्रेमवान् । अंसलो बलवान् ॥

## फेनादिलच्च (५.२.९९)

फेनिलः फेनलः फेनवान् ॥

## लोमादिपामादिपिच्छादिभ्यः शनेलचः (५.२.१००)

लोमरोमवल्गुबभ्रुगुरुरुहरिकपिकर्केभ्यः शः (स० ५-२-१४३) । लोमशः रोमशः बभ्रुवर्णवान् बभ्रुशः । स एव बभ्लुशः गुरुशः रुरुशः हरिशः कपिशः कर्कशः । 'पामवामहेमश्यामश्लेष्मोष्मदद्रुकसिवलिभ्यो

१. 'वर्णवान् वा । M. U. S. पाठः । २. 'भ्यो ल' M. U. S. पाठः ३. 'मू. च' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. M. U. S. पाठश्च । ४. 'लोमपञ्चकगुरुरु' इति मुद्रितपाठः ५. शाम M. U. S. पाठः.

नः (स० ५-२-१४४) । पामनः वामनः हेमनः [1]श्यामनः श्लेष्मणः ऊष्मणः दद्रुणः क्रमिणः वलिनः । दद्रूवा, ऊदन्तत्वपक्षे दद्रुवा ह्रस्वश्चेति माधवः । दद्रुणः । कुष्ठभेदो दद्रूवाच्यः । 'शाकीपलाली-कद्रूणां ह्रस्वश्च' (स० ५-२-१४५) । महच्छाकं शाकसमूहो वा शाकी महत्पलालं तच्चूर्णं वा पलाली । नागमाता, गृहगोधा वा कद्रूः । शाकिनं पलालिनं कद्रुणम् । 'विष्वचोऽकृतसन्धेरुत्तरपदलोपश्च' (स० ५-२-१४६) विषु अच् इत्यत्र अच्शब्दलोपः । विष्वञ्चो जना अस्य सन्तीति विषुणः । विष्वग्गमनवानपीति हरः । 'अङ्गात्कल्याणे' (स० ५-२-१४७) कल्याणाङ्गवत्यङ्गना । 'लक्ष्म्या अ च' (स० ५-२-१४८)ईकारस्यात्त्वम् । वा लक्ष्मीवान् लक्ष्मणः । 'पिच्छोरःपर्णोदक-ध्रुवकाधुवकाभ्रङ्गाभ्य इलच्' (स० ५-२-१३९) पिच्छा स्निग्धांशो-ऽस्यास्तीति पिच्छिलं दधि । उरसा बलं लक्ष्यते उरसिलः । पर्णिलः उदकिलः । ध्रुवकिलः । धुवकिलः ध्रुवकाधुवके पात्रभेदौ । भ्रङ्गिलः । [2]पङ्ककाकग्रहगुहाभ्यश्च' । पङ्किलः । काकिलः । आग्रहवान् ग्रहिलः । गुहिलः । 'जटाघटा[3]कलाभ्यः क्षेपे' (स० ५-२-१४०) सिध्मादौ पिच्छादौ चैवमेव हरोक्तम् । जटालः घटालः कलालः जटिलः घटिलः कलिलः । अक्षेपे तु जटावान्मुनिः । घटावान्नृपः । कलावान् विटः ॥

*प्राश्रज्ञश्राद्धार्चावृत्तिभ्यो णः (५. २. १०१)

प्राज्ञः श्राद्धः आर्चः वार्त्तः । स्त्रियां प्राज्ञा श्राद्धा । सर्वत्र मतुप् चोक्तः ॥

तपःसहस्राभ्यां विनीनी (५. २. १०२)

तपस्वी सहस्री ।

अण् च (५. २. १०३)

तापसः । साहस्रः । 'ज्योत्स्नादिभ्योऽण् वाच्यः' (वा०) । ज्योत्स्नातमिस्राङ्गुण्डलकुतुपविसर्पविपादिकाभ्यः' (स० ५-२-९१) ।

१. 'शामनः', २. 'अत्' मुद्रितपाठः अ. प. ठ. पाठः । ३. 'वर्गी-कद्रुणाम् ह्रस्वः' इति मुद्रितपरिशादिपाठः. ४. 'काशात् क्षेपे' इति मुद्रितपाठे-पादिपाठः, 'काशाभ्यः' इति मुद्रितपरसर्वस्वपाठः.

* 'प्रज्ञाश्राद्धार्चावृत्तिभ्यो णः' इति मुद्रितसिद्धान्तकौमुदीसूत्रपाठः, 'वृत्ति' इति प्रकृतौ न दृश्यते ।

ज्योत्स्नावान् ज्यौत्स्नः । पक्षः । तामिस्रः । कुण्डलवत्त्वाद्: कौण्डलः । तद्योगे तु कुण्डल्येवेति राम्भः । कुतुपः पात्रभेदः । तद्वान् कौतुपः । वैसर्पः वैपादिकः । आकृतिगणत्वाद् विजननवान् वैजननो मासः । शिलावत्त्वात् शैलः सौधः ।

## सिकताशर्कराभ्यां च (५. २. १०४)

अण् स्यात् । सैकतं शार्करं च पात्रम् । शर्कराशब्दो माधुर्यार्थ इति हरः । शार्करं क्षीरम् ।

## देशे लुबिलचौ च (५. २. १०५)

आभ्यां देशे वाच्ये लुबिलचावण् मतुप् च स्युः । लुपि प्रकृतिवत् सिकता अयं देशः । सिकतिलः सैकतः सिकतावान् । एवं शर्करेत्यादि ।

## दन्त उन्नत उरच् (५. २. १०६)

उन्नताद् दन्तादुरच् स्यात् । दन्तुरः उन्नतदन्तः ।

## ऊषसुषिमुष्कमधो रः (५. २. १०७)

ऊषरो देशः । रन्ध्रं सुषिः, तद्युक्तं वेण्वादि सुषिरम् । रन्ध्रसंज्ञे च लक्षणया ।

शुषिः शुषिरमित्यादि स्वाम्याद्या प्राञ्चते जगुः ।
प्राग्देशे हि सकारस्य शकारः पठ्यते क्वचित् ॥

मुष्करो वृषः । स्थूले च लक्षणया । माधुर्यार्थान्मधोर्मधुरम् । तेन मधुमत्कुसुममित्यत्र न । 'खमुखकुञ्जेभ्यश्च' । खं गलरन्ध्रं महदस्येति खरः । मुखेन वाग् लक्ष्यते तद्भूमवान् मुखरः । कुञ्जौ कुम्भाधोगतौ दंष्ट्रे वा तद्वान् कुञ्जरः । 'नगपांसुपाण्डुभ्यश्च' । नगाः प्रासादाः सन्त्यत्रेति नगरं पांसुरं पाण्डुरम् । पाण्डरशब्दस्त्वव्युत्पन्न इति हरः । बन्धुसिन्धुभ्यां च भोजः । बन्धुरः सिन्धुरः । 'कच्छ्वा ह्रस्वश्च' (स० ५-२-१५७) । विचर्चिकावान् कच्छुरः । 'शिखाया ह्रस्वश्च' इति स्वामी । शिखरम् ।

१. 'भाति कछ' ग. ङ. पाठः.

### द्युद्रुभ्यां मः (५. २. १०८)

द्युमः द्रुमः । द्रुरत्र तरुस्कन्धः ।

### केशाद्वोऽन्यतरस्याम् (५. २. १०९)

केशवः । विकल्पादिनिठन्मतुपः । केशी केशिकः केशवान् । 'वोऽन्येभ्योऽपि वाच्यः' (वा०) । मणिवो नामाहिः । हिरण्यवो निधिभेदः । राजी दलपङ्क्तिरस्यास्तीति राजीवम् । सचिवः । सचिः सेवा । 'अर्णसो लोपश्च' (वा०) । अर्णवः । 'मेधारथाभ्यामिरन्निरचौ' (वा०) । क्रमात् स्तः । मेधिरः रथिरः । ईरन्नीरचावित्यपि पाठो दृष्टः ।

### गाण्ड्यजगात्संज्ञायाम् (५. २. ११०)

गाण्डि गाण्डी अजग इत्येतेभ्यः संज्ञायां वः । गाण्डिः पर्वास्यास्तीति गाण्डिवं धनुः गाण्डीवम् । सन्धिसाम्यात् द्वयोर्ग्रहः । अजगवम् ।

### काण्डाण्डादीरन्नीरचौ (५. २. १११)

क्रमात् स्तः । काण्डीरः शरवान्, दण्डवान् वा । अण्डीरः । आण्डीर इति केचित् । आण्डमण्डमेव ।

### रजःकृष्यासुतिपरिषदो वलच् (५. २. ११२)

रजस्वला ।

### वले (६. ३. ११८)

वले परे पूर्वस्याणो दीर्घः स्यात् । कृषीवलः । आसुतीवलो यज्वा शौण्डिकश्च । परिषद्वलो नृपः । एकदेशविकृतत्वात् पर्षद्वलः । 'वलजन्येभ्योऽपि वाच्यः' । मदावलः भ्रातृवलः । पुत्रावलः उत्सङ्गावलः । दस्तु शत्रुवलः उत्साहवल इति च वदन् वल इत्यत्र संज्ञाधिकारादद्दीर्घमाह । तन्मते पुत्रावलादावनाम्नि 'अन्येषामपि दृश्यते' (६-३-१३७) इति दीर्घः ।

---

१. 'सचिः सेवा । सचिवः । धर्मं' ख. ग. भ. घ. ङ. पाठः. २. 'उत्साहवल' भ. घ. ङ. पाठ.

## दन्तशिखात्संज्ञायाम् (५. २. ११३)

दन्तावलः, शिखावलः ।

## ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिन॰ मलीमसाः (५-२-११४)

ज्योत्स्ना ज्योतिष्मत्वात् । तमिस्रा तामसी रात्रिः । क्लीबत्वमतन्त्रम् । तमिस्रं नभः, तमस्समूहोऽपि तमस्वत्वात् तमिस्रम् । शृङ्गवान् शृङ्गिणः । ऊर्जस्वी ऊर्जस्वलश्च बलवान् । "गोमिन् पूज्ये" (स० ५-२-२०७) इति भोजोक्त्या पूज्यो गोमान् गोमी ।

## अत इनिठनौ (५. २. ११५)

अदन्तात् मत्वर्थे एतौ स्तः । दण्डी । दण्डिकः । दण्डवान् । एवं कञ्चुकी । 'कञ्चुकीय इति क्यचि' इति वामनः । इच्छार्थक्यचि पचाद्यजयम् , न मत्वर्थीयः । तदिच्छया तद्वारित्वं लक्ष्यते ।

'एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ ।'

एभ्य इनिठनौ न । स्ववान्, कारकवान्, सिंहवान् । तदस्मिन्नित्यर्थेऽपि न । दण्डवती शाला । कृदादेः क्वचिदस्ति । कृतः कार्यी, पाकीत्यादि । जातेस्तण्डुलीत्यादि । द्रव्यादिभ्यश्च नेति भोजः । द्रव्यवान् । 'मत्वर्थीयात् सरूपो मत्वर्थीयो नेष्टः' । तेन ठनन्तात् पुनर्न ठन् । दण्डिकवान् ।

## व्रीह्यादिभ्यश्च (५. २. ११६)

एभ्य इनिठनौ स्तः । तत्र 'व्रीहिशालिशीर्षपर्यायाभ्य इनिठनौ'[1] (स० ५-२-१६८) । व्रीही । व्रीहिकः । शाली । शालिकः । शीर्षी । शीर्षिकः । मायी । मायिकः । व्रीहिमानित्यादि मतुबपि । 'शिखाशाखाकेकामालामेखलाबलाकापताकाष्टकाचूडावडवाघृणाबीजरागदासंज्ञाह्लनामनीपादंष्ट्रा[3]जटाकर्मचर्मवर्मधन्वञ्जन्मभ्यः' (स०५-२-१९५)

१. 'इत्यपि वा' घ॰ पाठः. २. 'इनिश्च', ३. 'दंष्ट्राभ्यो वा' इति च मुद्रितसरस्वतीकण्ठाभरणपाठः.

इनिरेव । शिखी । शाखी । केकी । माली । 'तदन्ताच्चेष्टम्' । वनमाली । मेखली । वलाकी । पताकी । अष्टकी । चूडी । घडवी । घूणी । वीणी । जरी । गदी । संज्ञी । सूनी । मनीषी । दंष्ट्री । जटी । कर्मी । चर्मी । वर्मी । धन्वी । जन्मी । मतुपि शिखावानित्यादि । यवखदानौसभाकुमारीकरणेभ्यष्ठनेव' (स० ५-२-१६७) । यवखदा यवस्य सारः । तद्वान् यवखदिकः । यविकः, खदिकः इत्यन्ये । नाविकः । सभिकः । कुमारिकः । करणिकः ।

## तुन्दादिभ्य इलच्च (५. २. ११७)

चकारादिनिठन्मतुपः । 'तुन्दोदरपिचण्डयवव्रीहिभ्यः' (स० ५-२-१४१) । तुन्दिलः । उदरिलः । पिचण्डिलः । प्रयस्तुल्यार्थाः । यविलः । व्रीह्यर्थग्रहणमिति वृत्तौ । व्रीहिलः । शालिलः । तुन्दी । तुन्दिकः । तुन्दवानित्याद्यपि । 'स्वाङ्गेभ्यो वृद्धौ' (स०५-२-१४२) । वृद्धः पादोऽस्यास्तीति पादिलः । कर्णिलः ।

## एकगोपूर्वाट्ठञ्नित्यम् (५. २. ११८)

एकगोपूर्वाददन्तान्नित्यं ठञ् , न मतुबादिः । ऐकशतिकः । गौशतिकः । गोत्रा गोसमूहः, तद्वान् गौत्रिक इत्यदन्तत्वमनाश्रित्य माधवोक्तिश्चिन्त्या ।

## शतसहस्रान्ताच्च निष्कात् (५. २. ११९)

नित्यं ठञ् । नैष्कशतिकः, नैष्कसहस्रिकः ।

## रूपादाहतप्रशंसयोर्यप् (५. २. १२०)

आहतत्वप्रशस्तत्वविशिष्टाद् रूपाद् यप् । आहतरूपवान् रूप्यः पणः । प्रशस्तरूपवान् रूप्यो युवा । 'अन्येभ्योऽपि दृश्यते'(वा०) । हिम्यः गुण्यः ॥

## अस्मायामेधास्रजो विनिः (५. २. १२१)

१. 'नौ' घ पाठः । ... 'यवखदानौसभाकुमारीकरणेभ्यः' इति मुद्रितपाठः ... २. 'स्मार्तीनि' घ पाठः ।

असन्ताद्यशस्वी । मायावी, मेधावी । पद्स्वात्कुत्वम् । स्रग्वी । 'आमयस्य दीर्घश्च' (वा०) । आमयावी । एभ्यो मतुप् च । यशस्वान् मायावानित्यादि । 'शृङ्गवृन्दाभ्यामारकन्वाच्यः' (वा०) । शृङ्गारकस्तरुः । प्रशस्तं वृन्दं रूपमेषामिति वृन्दारका इति टीकासर्वस्वे । 'फलबर्हाभ्यामिनज्वाच्यः' (वा०) । फलिनः । बर्हिणः । फली बर्हीत्यपीष्टम् । रथाच्चेति कौमुदी । रथिनः । 'हृदयाच्चालुर्वा' (वा०) । चः स्वरार्थः । हृदयालुः । हृदयी । 'शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वाच्यः' (वा०) । शीतालुः । उष्णालुः । तृप्रालुः । तृप्रं दुःखम् । 'हिमाच्चेलुः' (वा०) । चः प्राग्वत् । हिमं न सहते हिमेलुः । 'बलादूलच्' (वा०) । बलं न सहते बलूलः । 'वातात्समूहे', 'तन्न सहत इति च' (वा०) । वातूलः । हिमेलुबलूलवातूलांस्तन्न सहत इत्यर्थे आह भोजः । 'पर्वमरुद्भ्यां तप् ।' (स० ५-२-२०५) पर्वत उत्सववान् । शैलस्त्वौणादिकः । मरुतोऽस्य यज्ञे परिवेष्टत्वेन सन्तीति मरुत्तो राजा ॥

ऊर्णाया युस् (५. २. १२३)

सित्त्वेनाभत्वाद् 'यस्येति' (६-४-१४८) इति लोपाभावः । ऊर्णायुः ।

वाचो ग्मिनिः (५. २. १२४)

कुत्वजश्त्वे । वाग्मी ॥

आलजाटचौ बहुभाषिणि (५. २. १२५)

वाचालः । वाचाटः । 'कुत्सित इति वाच्यम्' (वा०) सम्यग्भाषी वाग्म्येव ॥

स्वामिन्नैश्वर्ये (५. २. १२६)

ऐश्वर्यवान् स्वामी ॥

अर्श आदिभ्योऽच् (५. २. १२७)

१. 'आमयस्योपसङ्ख्यानं दीर्घश्च', २. 'न्नन्', ३. 'नन्' इति न मुद्रितसिद्धान्तकौमुदीपाठः ४. 'द्रप्सतरम्यात्', ५. 'स्नादसाने', ६. 'न्नः', ७ 'ईच', ८. 'जयाह' इति न मुद्रितसिद्धान्तकौमुदीपाठः.

'अर्शउरश्चतुरतुन्दपलिताभ्राम्ललवणादिभ्यः' (स० ५-२-२१०) अर्शोऽस्यास्तीत्यर्शसः । शोभनोरस्क उरसः । चतुरः । तुन्दवांस्तुन्दः । पलितः । अभ्रयुक्तमभ्रं नभः । अम्लः । लवणः । आद्युक्तेर्वलवान् वलो नरः । पद्मवती पद्मा श्रीः कमला । धिषणावान् धिषणो गुरुः । पृषद् बिन्दुः तद्वान् पृषतो मृगः । 'जलौकस इत्यदन्तो जङ्कार्थः' इति टीकासर्वस्वे । कर्मधारयादच् । उच्चैर्भावोऽस्यास्तीत्युच्चः । नीचः । अव्ययत्वाट्टिलोपः । 'स्वाङ्गाद्धीनात् ।' (स० ५-२-२११) काणं चक्षुरस्येति काणः । खञ्जः पादोऽस्येति खञ्जः । 'वर्णाच्च' (स० ५-२-२१२) । शुक्लः । कृष्णः । पूर्व लुगुक्त्यैव सिद्धे स्वरभेदार्थमुक्तिः ॥

## द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः (५. २. १२८)

प्राणिस्थेभ्योऽदन्तेभ्यो द्वन्द्वादिभ्य इनिरेव । न ठनादि[1] । द्वन्द्वात् कटकवलयी । 'प्राण्यङ्गान्नेष्टम्'[2](वा०) । पाणिपादवान् । उपतापो रोगः । कुष्ठी । गर्ह्यं दुर्लक्षणम् । ककुदावर्तिनी स्त्री ॥

## वातातीसाराभ्यां कुक् च (५. २. १२९)

आभ्यामिनिः कुक् च । 'रोग एवेष्टम्'[3] । वातरोगवान् वातकी । अतीसारकी । एकदेशविकृतत्वादतिसारकी । 'पिशाचाच्च वाच्यम्'[4] (वा०) । पिशाचकी ॥

## वयसि पूरणात् (५. २. १३०)

वयसि वर्तमानात् पूरणान्तादिनिरेव । दशमं वयोऽस्यास्तीति दशमी वृद्धः । पञ्चमो मासः संवत्सरो वास्यास्तीति पञ्चमी ॥

## सुखादिभ्यश्च (५. २. १३१)

इनिरेव । सुखी । दुःखी । प्रणयी । अलीकी । 'मालायाः क्षेपे' (स० ५-२-१८५) माली मूढः । 'बलाद् बाहूरुपूर्वात्' (स० ५-२-१८६)

---

१. 'अर्शआदघटाम्ललवणादिभ्योऽच्' मुद्रितसरस्वतीकण्ठाभरणपाठः. २. 'पादोऽस्यास्तीति' M. U. S. पाठः. ३. 'प्राण्यङ्गान्न', ४. 'रोगे चायमिष्यते', ५. 'पिशाचाच्च', इति च मुद्रितसिद्धान्तकौमुदीपाठः.

बाहुबली । ऊरुबली । 'सर्वादेर्धनबीजकेशात्' । (स० ५-१-१८७) सर्वधनी वणिक् । सर्वबीजी कर्षकः । सर्वकेशी युवा । सर्वादेर्बलादपीति माधवः । सर्वबली नृपः ॥

धर्मशीलवर्णान्ताच्च (५. २. १३२)

द्विजधर्मोऽस्यास्तीति द्विजधर्मी । द्विजशीली । द्विजवर्णी ।

हस्ताज्जातौ (५. २. १३३)

हस्तीति गजजातिसंज्ञा । करदन्ताभ्यां च स्मोजः । करी । दन्ती ॥

वर्णाद् ब्रह्मचारिणि (५. २. १३४)

वर्णी ब्रह्मचारी ॥

पुष्करादिभ्यो देशे (५. २. १३५)

एभ्यो देशे वाच्य इनिः । पुष्करिणी । पद्मिनी । तरङ्गिणी । तटिनीत्यादि । अदेशे तु पुष्करवान् हस्ती । 'अर्थाच्चासन्निहिते' (वा०) । असन्निहितोऽर्थोऽस्येत्यर्थी याचकः ॥

बलादिभ्यो मतुबन्यतरस्याम् (५. २. १३६)

एभ्यो मतुविनिश्च । बलवान् । बली । व्रतवान् । व्रतीत्यादि । ठनभावः फलम् ॥

संज्ञायां मन्माभ्याम् (५. २, १३७)

मन्नन्तान्मशब्दान्ताच्च नाम्नीनिः । दामिनी । सोमिनी ॥

कंशंभ्यां बभयुस्तितुतयसः (५. २. १३८)

जलसुखवाचिभ्यां कंशंभ्यामेते स्युः । शमस्यास्तीति शम्बः । शम्भः । युस्यसोः सित्वेन पदत्वादव्ययत्वेऽपि टिलोपाभावः । 'मोऽनुस्वारः' (८-३-२३) । शंयुः, शन्तिः, शन्तुः, शन्तः । शंयः । एवं कमोऽपि ॥

१. 'सर्वकेशी वा ।', २. 'देशे इनिः' भ० ए० ह० पाठः

तुन्दिवलिवटेर्भः (५. २. १३९)

तुन्दिरुदरम् । तुण्डिस्तूलतनाभिः । एकदेशविकृतत्वाद् द्वयोरपि भ इति स्वामी । तुन्दिभः । तुण्डिभः । वलिभः । वटिभः । वटिस्तुण्डिः ॥

अहंशुभमोर्युस् (५. २. १४०)

अहमित्यहङ्कारे मान्तमव्ययं, शुभमिति शुभार्थे । अहंयुः । शुभंयुः ॥

इति मत्वर्थीयाः ।

इतः परं प्रायः स्वार्थे प्रत्ययाः ।

प्राग्दिशो विभक्तिः (५. ३. १)

'दिक्छब्देभ्यः' (५-३-२७) इति सूत्रात् प्राच्याः प्रत्ययाः विभक्त्याख्याः ॥

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः (५. ३. २)

किं शब्दाद् द्व्यादिवर्जाच्च सर्वनाम्नो बहोरपि ।
प्राग्दिशः प्रत्यया ज्ञेया नापरेभ्यो भवन्त्यमी ॥

पञ्चम्यास्तसिल् (५. ३. ७)

पञ्चम्यन्तात् किमादेः स्वार्थे तसिल् स्यात् । पञ्चम्याः प्रातिपदिकान्तर्गतत्वात् 'सुपो धातु'(२-४-७१)इति लुक् । किम् तस् ॥

कु तिहोः (७.२. १०४)

तादौ हादौ च विभक्तौ परतः किमः कुः स्यात् । कुतस् । अत्र विभक्त्यर्थस्यान्तर्गतत्वात् सामान्यजा सुब्विभक्तिरेव स्यात् । तेन 'तद्धितश्चासर्वविभक्तिः' (१-१-३८) इत्यव्ययत्वात् सुपो लुक् । कुतः बहुतः । सर्वनामभ्यः । सर्वतः । विश्वतः । तद् तस् ॥

त्यदादीनामः (७. २. १०२)

त्यदादीनां विभक्तौ परतोऽन्त्यस्यात्वं स्यात् । त अ तस् पररूपं ततः । यतः ॥

इदम इश् (५. ३. ३)

एतदोऽश् (५. ३. ५)

प्राग्दिशीये प्रत्यये परे एतौ स्तः । इतः । अतः । अदस् तस् । त्यदाद्यत्वपररूपत्वे अद तस् ॥

अदसोऽसेर्दादु दो मः (८. २. ८०)

सकाररहितस्यादसो दकारात्परस्य वर्णस्य उः स्यात् । दस्य च मः स्यात् । अमुतः ॥

तसिलादिष्वाकृत्वसुचः (६. ३. ३५)

तसिलादिषु कृत्वसुच्पर्यन्तेषु परेषु पुंल्लिङ्गसाधारणस्यानूङ्-स्त्रीलिङ्गस्य पुंवद्भावः स्यात् । तेन सर्वाशब्दस्यापि सर्वत इत्येव ॥

प्राग्दिशीयास्ततः पाशप्चरट्चा इष्ठरूपपौ ।
कल्पजातीयदेशीया इत्येव तसिलादयः ॥

पर्यभिभ्यां च (५. ३. ९)

तसिल् स्यात् । परितः सर्वतोऽर्थे । अभित इत्युभयतः शीघ्र-समीपाभिमुख्यादौ ॥

सप्तम्यास्त्रल् (५. ३. १०)

सप्तम्यन्तात्किमादेः त्रल् स्यात् । प्राग्वत् कुभावादिकमव्य-यत्वं च । कुत्र । सर्वत्र । विश्वत्र । तत्र । एतस्मिन्नत्र । अमुत्र । बहुत्र ॥

इदमो हः (५. ३. ११)

सप्तम्यन्तादिदमो हः स्यात् । 'इदम इश्' (५-३-३) इह ॥

किमोऽत् (५. ३. १२)

किम उत्कार्येऽत् ।.वः स्वरार्थः ॥

१. 'न्' इति मुद्रितसिद्धान्तकौमुदीपाठः २. 'ये परे', क. ख. ट. पाठः ३. 'सर्वनामस्य' क. ख. पाठः ४. 'सर्वशब्द' अ. ठ ड. पाठः

क्वाति (७. २. १०५)

अतिविभक्तौ परतः किमः क्वः स्यात् । 'यस्येति (च)' (६-४-१४८) इति लोपः । क्व । त्रलपीष्टः । कुत्र ।

इतराभ्योऽपि दृश्यन्ते (५. ३. १४)

इतरविभक्त्यन्तेभ्योऽपि किमादिभ्यस्तसिल्त्रलौ हातौ च दृश्यन्ते। 'भवद्दीर्घायुरायुष्मद्देवानां प्रियैर्योग एवेष्यते ।' स भवानित्यर्थे ततोभवान् तत्रभवान् । को भवानित्यर्थे कुतोभवान् , कुत्रभवान् , क्व भवान् । अयं भवानित्यर्थे इतोभवान् , अत्रभवान् , इहभवान् एवं ततोभवन्तं, तत्रभवन्तमित्यादि सर्वविभक्तिष्वपि योज्यम् । तथा स दीर्घायुरित्यर्थे ततोदीर्घायुः, तत्रदीर्घायुः । ततआयुष्मान्, ततोदेवानां प्रिय इत्यादि । दृश्युक्तेस्तच्छब्दादीनामेव ॥

सर्वैकान्यकियत्तदः काले दा (५. ३. १५)

कालवृत्तिभ्यः सप्तम्यन्तेभ्य एभ्यो वा दा स्यात् ।

सर्वस्य सोऽन्यतरस्यां दि (५. ३. ६)

दाप्रत्यये परे सर्वस्य वा सादेशः स्यात् । सदा । सर्वदा । एकदा । अन्यदा ॥

किमः कः (७. २. १०३)

किमो विभक्तौ परतः कः स्यात् । कदा, यदा, तदा । वेत्युक्तेः सर्वत्र काल इत्यागपि ॥

इदमो र्हिल् (५. ३. १६)

सप्तम्यन्तादिदमः काले र्हिल् स्यात् ।

एतेतौ रथोः (५. ३. ४)

इदमो रेफे थे च परे क्रमात् एत इत् इत्यादेशौ स्तः । एतर्हि ॥

अधुना (५. ३. १७)

इदमः कालेऽर्थे च निपातः ॥

दानीं च (५. ३. १८)

इदमः काले दानीं स्यात्। इश्। इदानीम्। अस्य 'हलन्त्यम्' (१-३-३) इतीत्त्वे प्राप्ते ॥

न विभक्तौ तुस्माः (१. ३. ४)

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। अस्य निषेधस्यानित्यत्वात्। 'किमोऽत्' (५-३-१२) इति तकारस्त्विदेव ॥

तदो दा च (५. ३. १९)

सप्तम्यन्तात्तदः काले दानीं दा च स्यात्। तदानीं, तदा ॥

अनद्यतने र्हिलन्यतरस्याम् (५. ३. २१)

सप्तम्यन्तात् किमादेरनद्यतने काले वा र्हिल् स्यात्। किंयत्तदन्येभ्य एवेति भोजः। कर्हि, यर्हि, तर्हि, अन्यर्हि। विकल्पात् कदा तदेत्याद्यपि। अद्यतने तु कदा तदेत्येव ॥

सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः (५. ३. २२)

एते सप्तम्यर्थवन्तः कालविशेषे स्युः।
समानेऽहनि सद्यः स्यात् पूर्वस्मिन् वत्सरे परुत्।
ततः पूर्वे परारि स्यादस्मिन् वत्सर ऐषमः ॥
परेद्यवि परेऽह्नि स्यादद्येत्यस्मिन्नहन्यपि।
पूर्वेद्युरादयः सर्वे तत्र तत्राहनि स्थिताः ॥
परेद्यवीत्यतीतेऽपि तदीयेऽह्न्याह भोजराट्।
परुत्परारिशब्दौ च साधितस्वरवर्णयोः ॥

उभयेद्युरिति चेष्टम्।

प्रकारवचने थाल् (५. ३. २३)

प्रकारेऽर्थे किमादिभ्यस्थाल् स्यात्। सर्वप्रकारेण सर्वथा। यथा। तथा। 'एतदस्मान्नेष्टः' ॥

इदमस्थमुः (५. ३. २४)

इदमः प्रकारे थमुः स्यात् । थे परे इदादेशः । इत्थम् ॥

किमश्च (५. ३. २५)

कथम् ॥

इति प्राग्दिशीयाः ।

---

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः (५. ३. २७)

दिग्देशकालवृत्तिभ्यः सप्तम्याद्यन्तेभ्यो दिक्शब्देभ्यः स्वार्थेऽस्तातिः स्यात् । इलोपः ।

अस्ताति च (५. ३. ४०)

अस्तात्प्रत्यये परे पूर्वाधरयोः पुर् अध् इत्यादेशौ स्तः । पुरस्तात्, अधस्तात् । अव्ययत्वात्सुलुक् ॥

विभाषाऽवरस्य (५. ३. ४१)

अवरस्यास्तातावव् वा स्यात् । अवस्तात्, अवरस्तात् । एवं सप्तम्याद्यर्थेषु योज्याः । पुरस्तात् वसति, पुरस्तादागतः । पुरस्ताद्रम्यमिति दिशि । तथा देशे, कालेऽपि ॥

पूर्वाधरावराणामसि पुरधवश्चैषाम् (५. ३. ३९)

पूर्वादिभ्योऽस्तात्यर्थेऽसिप्रत्ययः पुराद्यादेशाश्च स्युः । पुरः, अधः, अवः । पुरत इति तु निपातः ॥

दक्षिणोत्तराभ्यामतसुच् (५. ३. २८)

अस्तात्यर्थे । दक्षिणतः, उत्तरतः ॥

विभाषा परावराभ्याम् (५. ३. २९)

आभ्यामतसुज्वा । परतः, अवरतः । परस्तात्, अवरस्तात् ॥

अञ्चेर्लुक् (५. ३. ३०)

अञ्चत्यन्तेभ्यो दिक्शब्देभ्योऽस्तातेर्लुक् स्यात् । प्राच्यां दिशीत्यादौ प्रागित्येव । अत्र तद्धितलुकि ङीप्प्रत्ययस्यापि लुक् । प्रागवाक्, उदक् । प्रत्यक् ॥

उपर्युपरिष्टात् (५. ३. ३१)

वृत्तौ ऊर्ध्वस्यास्तात्यर्थे रिः । (उपरि, उपरिष्टात्) ॥

पश्चात् (५. ३. ३२)

अपरस्यास्तात्यर्थे पश्चभाव आतिश्च निपात्यते । अपरा दिक् पश्चात् । 'दिक्पूर्वपदस्यापि वाच्यम्' (वा०) दक्षिणपश्चात्, उत्तरपश्चात् । 'दिक्पूर्वपदस्य केवलस्य चापरस्यार्धे पश्चभावो वाच्यः' (वा०) दक्षिणपश्चार्धम्, पश्चार्धम् ॥

उत्तराधरदक्षिणादातिः (५. ३. ३४)

एभ्योऽस्तात्यर्थे आतिः स्यात् । उत्तरात् वसतीत्यादि ॥

एनबन्यतरस्यामदूरेऽपञ्चम्याः (५. ३. ३५)

पञ्चमीवर्जितपूर्वोक्तविभक्त्यन्तेभ्य उत्तरादिभ्योऽस्तात्यर्थेऽदूरत्वे द्योत्ये एनब् वा स्यात् । उत्तरस्यां दिश्यदूरे वसति उत्तरेण वसति । उत्तरेण रम्यम् । अधरेण, दक्षिणेन । विकल्पादुत्तरत इत्याद्यपि । दिक्शब्दमात्रादेनबिति केचित् । पूर्वेण, पश्चिमेन ॥

दक्षिणादाच् (५. ३. ३६)

अस्मादेनबविषये आच् स्यात् । दक्षिणा वसति ॥

आहि च दूरे (५. ३. ३७)

सप्तमीप्रथमान्तात् दक्षिणादस्तात्यर्थे दूरे द्योत्ये आहिराजपि स्यात् । दक्षिणाहि, दक्षिणा ॥

---

१ 'ह्र । उपरि उपरिष्टात् [illegible] ॥ पश्चात्,' [illegible]

उत्तराच्च (५.३.३८)

अस्मादपि दूरे आजाही स्तः । उत्तराहि, उत्तरा ॥

इत्यस्तातिभागः ।

---

संख्याया विधार्थे धा (५.३.४२)

सङ्ख्यायाः क्रियाप्रकारेऽर्थे धा स्यात् । एकधा पचति । द्विधा याति ॥

अधिकरणविचाले च (५.३.४३)

अधिकरणं द्रव्यम् । विचालः सङ्ख्यान्तरापत्तिः । तद्विषये सङ्ख्याया धा स्यात् । दारु द्विधा करोति । मृत्पिण्डमनेकधा करोति ॥

एकाद्धो ध्यमुञन्यतरस्याम् (५.३.४४)

एकात्परस्य धो वा ध्यमुञादेशः । ऐकध्यं भुङ्क्ते । एकधा ॥

द्वित्र्योश्च धमुञ् (५.३.४५)

आभ्यां धो वा धमुञ् । द्वैधं, त्रैधम् । द्विधा, त्रिधा । 'धमुञन्ताड्डो वाच्यः (वा०) ।'[1] द्वैधं तद्गतीति भोजः । द्विप्रकारत्वात् द्वैधो वर्णः । नैषः ॥

एधाच्च (५.३.४६)

द्वित्रिभ्यां धः एधाजपि वा स्यात् । द्वेधा, त्रेधा ॥

याप्ये पाशप् (५.३.४७)

कुत्सिते स्वार्थे पाशप् स्यात् । भिषक्पाशः । यशस्पाशम् । स्वार्थिकानां प्रकृतिवल्लिङ्गवचनमिष्टम्[2] । तच्च क्वचिदतिवर्तत इति यशस्पाशमित्याह वृत्तिः ॥

पूरणाद्भागे तीयादन् (५.३.४८)

---

१. 'ध्यमेकस्मा' क. ग. ङ. पाठः. २. 'स्वार्थे ध्यर्थिनाम्' सिद्धान्तकौमुदी-स्थः ३. 'धमन्ते' ख. ग. ङ. पाठः.

तीयान्तात्पूरणप्रत्ययाद् भागे स्वार्थेऽन् स्यात्। स्वरभेदायान्विधिः। द्वितीयो भागः, तृतीयः ॥

प्रागेकादशभ्योऽच्छन्दसि (५. ३. ४९)

एकादशभ्यः प्राग्यात् पूरणात् भागेऽर्थे लोके स्यात्। पञ्चमः, सप्तमो भागः ॥

षष्ठाष्टमाभ्यां ञ च (५. ३. ५०)

आभ्यामच्छन्दसि भागेऽञ् चान् स्यात्। षष्ठः, षाष्ठः। अष्टमः आष्टमः ॥

मानपश्वङ्गयोः कन्लुकौ च (५. ३. ५१)

अनयोरर्थयोः षष्ठाष्टमाभ्यां क्रमात् कन् लुक् च स्यात्। चकाराद् ञानौ च। षष्ठक इति माने। अष्टम इति पश्वङ्गे। तथा षाष्ठः, षष्ठः। आष्टमः, अष्टमः ॥

एकादाकिनिच्चासहाये (५. ३. ५२)

असहायार्थादेकादाकिनिच्। चात् कन् च वा लुक् स्यात्। एकाकी, एककः, एकः ॥

भूतपूर्वे चरट् (५. ३. ५३)

प्राक् सुन्दरः सुन्दरचरः। टित्वात्सुन्दरचरी। 'तसिलादिष्वि'ति सुन्दर्याः पुंवत्त्वम् ॥

षष्ठ्या रूप्य च (५. ३. ५४)

अतिशये घोत्ये घतौ स्तः । अयमेषां लघुतमः । 'टेः' (६-४-१५५) इति टिलोपः, लघिष्ठः । एतदन्तिकतमः ।

आन्तिकस्य तमे सादेर्लोपः कादेश्च वा भवेत् ।
इति भोजोक्तितो लोकेऽप्यन्तमोऽन्तितमः स्थितौ ॥

तिङश्च (५. ३. ५६)

तिङन्तादतिशये तमप् स्यात् ।

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५. ४. ११)

किमादेः परो यो घः तदन्तादद्रव्यप्रकर्षे आमुप्रत्ययः स्यात् । आमः स्वरादिपाठात् अव्ययत्वम् । पचतितमाम् ॥

द्विवचनविभज्योपपदे तरबीयसुनौ (५. ३. ५७)

द्व्यर्थवचने विभज्ये चोपपदे सुप्तिङन्तादेतौ स्तः । अनयोर्लघुतरः लघीयान् । विभज्ये — प्राच्येभ्यः प्रतीच्याः पटुतराः पटीयांसः । अत्र प्राच्यानवधिं कृत्य तेभ्यः प्रतीच्यानामतिशय उच्यते । '[illegible]प्रतियोग्यपेक्षायामप्यातिशायनिकाः' इति भाष्योक्तेरुपपदाप्रयोगेऽपि पटुतरोऽयमित्यादि स्यात् ।

अजादी गुणवचनादेव (५. ३. ५८)

इष्ठनीयसुनौ गुणवचनात्सुबन्तादेव स्तः । तेन पाचकतरः पाचकतम इत्यत्र न । 'ह्रस्वात्तादौ'(८-३-१०१) इति षत्वम् । सर्पिष्टरं, सर्पिष्टरस् । 'तिङन्तस्य षत्वं नेति वाच्यम्' (वा०) । भिन्द्युस्तमाम् । 'पुंसश्च न' । पुंस्तरः । किमेत्तिङादिनाऽऽमुः । किन्तमां नृप याहि किन्तराम् । क्रियाविशेषणविवक्षया प्रत्ययस्य [illegible] प्रश्नः । पेतुः । मार्जितमाम् । सर्वादेः [illegible] । इति तु [illegible] गतः ।

स्थेष्ठः। स्थिरं बहुल् । (स्फे? स्फे)ष्ठः, वरिष्ठः, बंहिष्ठः, गरिष्ठः, वर्षिष्ठः, त्रपिष्ठः, द्राघिष्ठः । वृन्दारकश्रेष्ठः वृन्दिष्ठः । इयसुनि प्रेयानित्यादि । 'बहोर्लोप' इतीयस आदिलोपो बहोर्भूश्च । भूयान् ॥

इष्ठस्य यिट् च (६. ४. १५९)

बहोः परस्येष्ठस्य यिडागमो बहोर्भूश्च स्यात् । यिट इट्कत्यर्थः । भूयिष्ठः । 'र ऋतो हलादेरि'ति प्रथिष्ठः । म्रदिष्ठः ॥

यौ पुनरिष्ठेयसुनोरिष्टौ श्रेयस्तरो वरिष्ठतरः ।
स्वार्थेऽपि च तौ वचनाद्यबलान्तरमप्यतिमतरेष्ठ ॥

प्रशंसायां रूपप् (५. ३. ६६)

प्रशस्तो भिषक् भिषग्रूपः ।

स्वार्थस्यैव भिषक्त्वादेः कुत्सादौ प्रत्यया मताः ।
भिषक्पाशो भिषग्रूपो नान्यैर्दोषगुणैर्भवेत् ॥

नामजात्योः पुनः स्वार्थे स्तुतिनिन्दाद्यसम्भवात् ।
तद्धर्मैः स्याद् देवदत्तगवः सिंहतमस्तथा ॥

अप्रशस्तेऽपि स्वार्थे पूर्णत्वे रूपप् स्यात् । दस्युरूपः । अतिशायने प्रतियोग्यपेक्षास्ति, रूपपि तु नेति भेदः । तिङोऽप्युक्तेः पचतिरूपं, पचन्तिरूपम् । तिङन्ते क्रियाप्रधानत्वात् क्लीबैकत्वमेव ॥

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः (५. ३. ६७)

सुप्तिङन्तेभ्य ईषदपूर्णतायामेते स्युः । ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । एवं पचतिकल्पमित्यादि । पञ्चकल्पं सुखमित्यादौ पञ्चगुणयोगात् पञ्चत्वजात्यभावा चेषदसमाप्तिरित्यर्थात् सादृश्यम् । माधुर्यादिन्यूनतया च गुडकल्पो गुडः इत्याद्यपि स्यादिति दृढः ॥

१. 'मम्' घ. पाठः २. 'स्वार्थपू', ३. 'पि-नेति' M. U. S. पाठः,
४. 'मासेत्य', ५. ६. 'ड' M. U. S. पाठः

विभाषा सुपो बहुच् पुरस्तात्तु (५. ३. ६८)

उक्तेऽर्थे सुबन्तस्य पुरस्ताद् बहुच्प्रत्ययो वा स्यात्। किञ्चिदूनः पटुः बहुपटुः। प्रत्यय[1]त्वेन प्रातिपदिकत्वात्पूर्व[2]सुब्लुकि सुबन्तरोत्पत्तावपि स्वलिङ्गवचनत्वमेवेष्टम्। बहुतृणं नरः॥

प्रकारवचने जातीयर् (५. ३. ६९)

प्रकारो भेदः सादृश्यं च। तद्वति वाच्ये जातीयर् स्यात्। वक्रत्वविशिष्टत्वात् वक्रजातीयो दण्डः। चन्द्रजातीयं मुखम्। थाल् प्रकार एव। अयं तु तद्वति। तेन थालन्तादपि स्यात्। तथाजातीयः॥

आन्महतः समानाधिकरणजातीययोः (६. ३. ४६)

समानाधिकरणे उत्तरपदे जातीये च परे महतोऽन्त्यस्यात्वं स्यात्। महाजातीयः॥

प्रागिवात् कः (५. ३. ७०)

'इवे प्रतिकृतौ' (५-३-९६) इत्यतः प्राक् कविधिः॥

अज्ञाते (५. ३. ७३)

स्वाम्यादिविशेषेणाज्ञातेऽर्थे कः स्यात्। कस्यायमित्यज्ञातोऽश्वोऽश्वकः॥

अव्ययसर्वनाम्नामकच् प्राक् टेः (५. ३. ७१)

अस्मिन्प्रकरणेऽव्ययानां सर्वनाम्नां तिङश्च टेः प्रागकच् स्यात्। उच्चकैः नीचकैः। सर्वनाम्नां तु —

साधोदादिप्रकारादिसुप्सु स्यात् प्रकृतेरकच्।
अन्यत्र तु सुबन्तस्येत्याहुर्भोजदारादयः॥

---

१. 'ईषदूने' अ. ग. ङ. पाठः २. 'र्वं' क. ग. पाठः.

सर्वकस्मै, सर्वकेषां, युष्मकासु, सर्वकयोः, सर्वकेभ्यः, युष्मकाभिः । सुबन्तस्य सर्वके, त्वयका, मयका । बहुव्रीहौ सर्वनामत्वनिषेधात् कः एव कृते त्वत्कपितृक इति भाष्ये । त्वकत्पितृक इत्यकजेवेत्यन्ये । तिङस्तु पचतकि, पचतके । 'अकज्विषये तूष्णीमः कां वाच्यः' (वा०) । प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परत्वम् । तूष्णीकाम् । 'शीले को मलोपश्च'[1] (वा०) । तूष्णींशीलस्तूष्णीकः ।

कस्य च दः (५. ३ ७२)

अकचि सति ककारान्ताव्ययस्य दकारोऽन्तादेशः स्यात् । पृथकद् । धकित् ।

कुत्सिते[2](५. ३. ७४)

अस्मिन्नर्थे काकचौ स्तः । विप्रकः । अल्पतकि । तूष्णीकामास्ते ॥

संज्ञायां कन् (५. ३. ७५)

संज्ञायां कुत्सिते कन् स्याच्छूद्रकश्चूर्णकादयः ।
तिप्रत्ययान्तशब्दस्य रूपात् क्वाचं मति सिधाई ॥
तिङ्क्तावाचको ज्ञानी रूढेर्थोऽत्र प्रयुज्यताम् ।

अनुकम्पायाम् (५. ३. ७६)

इहानुकम्पितः पुत्रः पुत्रको, मन्दकेतकि ।

नीतौ च तद्युक्तात् (५. ३. ७७)

सामाद्युपायैः शिक्षा नीतिरिति[3] वृत्त्यभिप्रायः । तस्यां द्योत्यायामनुकम्पायुक्तात् काकचौ स्तः । हन्त ते गुडकाः, एहकि । पूर्वत्र दयाविषयात् पुत्रादेरेव प्रत्ययः । इह तु तत्सम्बन्धाद् गुडादेरपीति भेदः ।

बह्वचो मनुष्यनाम्नष्ठज्वा (५. ३. ७८)

अनुकम्पामात्रे तद्युक्तनीतौ चार्थे बह्वचो नृनाम्नष्ठज्वा स्यात् ॥

१. 'ते । काकचौ', २. 'भे' अ. ट. ऽ. पाठः ३. 'रि' ना' क. रा. प. अ., ए. ऽ, पाठः. ४, 'धी' अ. ट ऽ. पाठः

### ठाजादावूर्ध्वं द्वितीयादचः (५. ३. ८३)

उक्तार्थे ठेऽजादौ प्रत्यये च परे द्वितीयादच ऊर्ध्वगस्य भागस्य लोपः स्यात् । अनुकम्पितः शिक्ष्यमाणो वा देवदत्तो देविकः । वासिष्ठो वासिकः । मातृदत्तो मातृकः । उगन्ताद्धस्य कः ।

एचास्त्विह द्वितीयाच्त्वे द्वितीयाजपि लुप्यते ।
कुबेरदत्तोऽनुकम्प्यः शिष्यो वा कुबिको भवेत् ॥

ठचो विकल्पात् के देवदत्तकः । 'के च वा लोपो वाच्यः' (वा०) । देवकः । 'ठाजादौ के च पूर्वपदस्यापि वा लोपो वाच्यः' (वा०) । दत्तिकः, दत्तकः । 'विनापि प्रत्ययेन पूर्वोत्तरपदयोर्वा लोपो वाच्यः' (वा०) । सत्या भामा, सत्यभामा ॥

प्राचामुपादेरडज्वुचौ च (५. ३. ८०)

उपादेर्बह्वचो नाम्न उक्तेऽर्थे अडज्वुचौ च पूर्वोक्ताश्च वा स्युः । अनुकम्पित उपेन्द्रदत्त उपडः । उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः । प्राचामिति पूजार्थम् ॥

जातिनाम्नः कन् (५. ३. ८१)

मनुष्ये कृतेभ्यः सिंहादिजातिनामभ्य उक्तार्थे कन् स्यात् । सिंहकः । शरभकः । 'ठजूवर्जितस्येष्टा' । सिंहिकः, शरिकः इत्यादि ॥

अजिनान्तस्योत्तरपदलोपश्च (५. ३. ८२)

अजिनान्तस्य नृनाम्न उक्तेऽर्थे कन् उत्तरपदलोपश्च स्यात् । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः ।

अल्पे (५. ३. ८५)

अल्पार्थे प्रागुक्तौ स्तः । घृतकं, तदतडि ।

ह्रस्वे (५. ३. ८६)

ह्रस्वो वृक्षो वृक्षकः ॥

संज्ञायां कन् (५. ३. ८७)

ह्रस्वेऽर्थे नाम्नि कन् । वंशकः, वेणुकः ॥

कुटीशमीशुण्डाभ्यो रः (५. ३. ८८)

ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । स्वार्थेऽपि क्वचित् स्वलिङ्गभाव उक्तः ॥

कुत्वा डुपच् (५. ३. ८९)

चार्मणं स्नेहपात्रं कुतूः । सा ह्रस्वा कुतुपः ॥

---

१. 'नृनाम्न', २. 'थें टज्वु' M. U. B. पाठः.

कासूगोणीभ्यां ष्टरच् (५. ३. ९०)

आभ्यां ह्रस्वे ष्टरच्। स्वार्थिकत्वात्, स्त्रीत्वेन षित्वात् ङीष्। कासूतरी, गोणीतरी। कासूः शक्तिः॥

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे (५. ३. ९१)

एभ्यस्तनुत्वे द्योत्ये ष्टरच्। बालो गौर्वत्सः, तस्य यौवनारम्भे बाल्यस्य तनुत्वाद् वत्सतरः। तरुणो गौरुक्षा, सोऽपि तदूर्ध्ववयःप्राप्तौ तारुण्यस्य तनुत्वाद् उक्षतरः। गर्दभेनाश्वायामुत्पादितोऽश्वतरः। अत्राश्वत्वस्य तनुत्वम्। शक्तेस्तनुत्वाद् ऋषभतरो दुर्बलानड्वान्॥

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्(५. ३. ९२)

द्वयोरेकस्य पृथक्करणे सति किंयत्तद्भ्यः स्वार्थे डतरच् स्यात्। अनयोः कतरो वैष्णवः, यतरस्तेजस्वी, ततरः। कः, यः, सः इत्येवार्थाः। 'अन्यात् स्वौजः'। अन्यतरः। अस्मात्तपाच्तरवत् स्वार्थे तरबिति स्वामी॥

वा बहूनां जातिपरिप्रश्ने डतमच् (५. ३. ९३)

बहूनामेकस्य निर्धारणे तु यथार्हं जातितत्प्रश्नार्थेभ्यः किंयत्तद्भ्यो वा डतमच् स्यात्। एषां कतमो विप्रः, यतमः, ततमः। ओजोक्तेरन्यतमोऽपि। वेति व्यर्थमिति दुराप्याः। अकजर्थमिति माधवाः। ककः, यकः, सकः। 'किमोऽस्मिन्नर्थे डतरजपीष्टः'। कतर एषां विप्रः। 'अजातेः प्रश्नेऽपीष्टः'। कतम एषां हरिः॥

एकाच्च प्राचाम् (५. ३. ९४)

एकशब्दादुक्तविषये वा डतरडतमौ स्तः। एतयोरेकतरः कृष्णः। एषामेकतमो रामः। अत्र जातिपरत्वनियमो न। विकल्पादेककः, एकः॥

अवक्षेपणे कन् (५. ३. ९५)

क्षेपसाधनात् कन्। व्याकरणकेन त्वं गर्वितः। अत्र व्याकरणस्य सम्यक्त्वेऽपि गर्वितस्य तन्निन्दासाधनं भवति॥

इति कविभागः॥

इवे प्रतिकृतौ (५. ३. ९६)

इवार्थे प्रतिमायां वाच्यायां कन् स्यात्। अश्वसदृशी प्रतिमा अश्वकः। प्रतिकृतित्यनेन सादृश्यसिद्धेरिवोक्तिरपार्था॥

संज्ञायां च (५. ३. ९७)

इवार्थे नाम्नि कन्। गर्दभकः।

लुम्मनुष्ये (५. ३. ९८)

संज्ञोक्तस्य कनो मनुष्ये वाच्ये लुप्। लुपि प्रकृतिवल्लिङ्गवचने। चञ्चा तृणपुरुषः, तत्सदृशः पुरुषश्चञ्चा। 'मनुष्यलुपि विशेषणानां युक्तवद्भावो नेति वाच्यम्' (वा०)। रम्यश्चञ्चा॥

जीविकार्थे चापण्ये (५. ३. ९९)

जीविकार्थायां प्रतिमायां वाच्यायां लुप् स्यात्। स्कन्दः, विष्णुः। याचद्भिः प्रतिगृहं प्रदर्श्यमाना देवप्रतिमा इमाः। पण्ये तु न लुप्। हस्तिकान्, विष्णुकान् विक्रीणीते॥

देवपथादिभ्यश्च (५. ३. १००)

एभ्यः प्रतिकृतौ कनो नाम्नि लुप्। देवानां मार्ग इवाभातीति देवपथः आकाशगङ्गाख्या रेखा। आकृतिगणोऽयम्॥

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च।
लुप् स्याद् देवपथादित्वादिवे प्रतिकृतौ कनः॥

देवालये गृहे वा पूजार्थास्वर्चासु—शिवः, विष्णुः। चित्रकर्मणि—रामः, रावणः। ध्वजे—वृषः, गरुडः। अभेदोपचारादपि सर्वसिद्धिः॥

---

१. 'कभागः' क. ख. छ. पाठः. २. 'पर्वेषु' ख. पाठः. ३. 'कृतिक' ख. घ. ङ. पाठः. ४. 'जनार्थो' क. ख. ग. ङ. पाठः.

वस्तेर्ढञ् (५. ३. १०१)

अस्मादिवार्थमात्रे ढञ् । वस्तितुल्यं वास्तेयं, फलम् ॥

शिलाया ढः (५. ३. १०२)

'ढञपीष्टः' । शिलातुल्यं शिलेयं, शैलेयं वा दधि ॥

शाखादिभ्यो यः (५. ३. १०३)

'शाखामुखजघनमेघचरणस्कन्धोरश्शिरश्शृङ्गाग्रशरणेभ्यः' (स० ५-३-२३८) । शाखातुल्यः शाख्यः, मुख्यः, जघन्यः । मेघ्यो हरिः । चरण्यः, स्कन्ध्यः, उरस्यः, शिरस्यः, शृङ्ग्यः, अग्र्यः । गृहवदाश्रयः शरण्यः । शरणे समाश्रयणे साधुरिति शङ्करः । 'सोमवत् प्रियदर्शनं सोम्यमिति च स्वामी ॥

द्रव्यं च भव्ये (५. ३. १०४)

समर्थे वाच्ये द्रव्येति निपात्यते । द्रव्यमयं राजपुत्रः, पुण्यः फलवान् वृक्षः । पुरुषार्थसाधनत्वाद् धनमपि द्रव्यमिति नाथः ॥

कुशाग्राच्छः (५. ३. १०५)

इवार्थे । कुशाग्रीया बुद्धिः । 'कुशाग्रार्धजरतीघुणाक्षरादिभ्यश्छः' इति भोजः । अर्धवृद्धा हि नारी कामिनार्धेष्टार्धानिष्टा च भवतीति तादृशं कार्यमर्धजरतीयम् । अबुद्धिपूर्वसिद्धं घुणाक्षरीयम् ॥

समासाच्च तद्विषयात् (५. ३. १०६)

एतत्तद्धितार्थविषयात् काकतालादिसमासादिवार्थे छः स्यात् । समासोऽप्यनेनैव कल्प्यः ।

'यदृच्छागमस्य काकस्य पतत्तालस्य चान्वयः ।
प्रकृत्यर्थोऽत्र तत्तुल्यं काकतालीयमुच्यते' ॥

१. 'छः । अस्य छत्वे । शि' ग. म. पाठः. २. 'ति यदिति स' M. U. S. पाठः. ३. 'क' ग. म. छ. पाठः. ४. 'र्ध' M. U. S. पाठः. ५. 'अधःप्रधाविका' क. पाठः.

एवमजायाः पतत्कृपाणस्य च योगेन सदृशमजाकृपाणीयम् । अन्धहस्ते वर्तिकापातेन सदृशमन्धवर्तिकीयम् । गोमयवायसीयम् । दैवोपनतमेभिरुच्यते ।

एवं प्रयोगानुगुणं दण्डनाथोक्तमीरितम् ।
एष्विवार्थद्वयं वृत्ताविष्टं क्लिष्टतरं तु तत् ॥

### शर्करादिभ्योऽण् (५. ३. १०७)

'शर्कराकपालिकाकवाटिकासिकतानकुलनाराचीशतपत्रपुण्डरीकेभ्यः' (स० ५-३-१४२) । शर्करातुल्यं शार्करं वचः । कापालिकं, कावाटिकं, सैकतं, नाकुलं, नाराचं, शातपत्रं, पौण्डरीकम् । 'गोलोमपुच्छाभ्याम्' (स० ५-३-१४३) । गोलोमसदृशं गौलोमनम् । अण्यनः प्रकृतिभावः । गौपुच्छम् । 'असपत्न्याः' (स० ५-३-१४४) । पत्नीसदृशत्वात् सपत्नः शत्रुः ॥

### अङ्गुल्यादिभ्यष्ठक् (५. ३. १०८)

अङ्गुलीतुल्य आङ्गुलिकः । मण्डलवत्स्थितं माण्डलिकम् । एवं मुनिहरिकपिखलोदश्विद्रुरुशष्कुलीकुलिशगोण्यादेः ॥

### एकशालायाष्ठजन्यतरस्याम् (५. ३. १०९)

अत्रान्यतरस्यामिति समुच्चये । तेन ठक् च स्यात् । एकशालिकः । ऐकशालिकः ॥

### कर्कलोहितादीकक् (५. ३. ११०)

कर्कः श्वेतोऽश्वः । तत्सदृशः कार्कीकः । लोहितवद्भासमानो लौहितीकः स्फटिकः ॥

इतीवार्थभागः ॥

---

१. 'न्धकवर्तकी' ख. ग. पाठः. २. 'यमू दैवो' M. U. S. पाठः. ३. 'अनू सप' M. U. S. पाठः. ५. 'नाराच' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. ४. अङ्गुल्यादिगणे भरुज वभ्रु वल्गु मण्डर रुह उरस् इत्येतेऽधिकतया मुद्रितपुस्तके दृश्यन्ते रुरुशब्दश्च नास्ति ।



२५ २६०

## पूगाञ्ञ्योऽग्रामणीपूर्वात् (५. ३. ११२)

पूगाः स्युर्बहुजातीया अर्थकामपरा गणाः ।
तद्वाचकेभ्यः स्वार्थे ञ्यो न तु तन्नाथपूर्वकात् ॥

शैब्यः शैब्यौ शिबयः । अत्र 'ञ्यादयस्तद्राजाः' (५-३-११९) इति तद्राजत्वाद् बहुषु लुक् । लौहध्वज्यः लौहध्वज्यौ लौहध्वजाः । देवदत्तग्रामणीको देवदत्तकः । पूग इत्यत्र, ग्रामणीभूतदेवदत्तपूर्वकत्वाञ्ञ्यो न ॥

## व्रातच्फञोरस्त्रियाम् (५. ३. ११३)

अत्र च्फञो ञ्यः पूर्वमुक्तः । व्रातात्तु त्रैहिमत्यः त्रैहिमत्यौ त्रीहिमताः । स्त्रियां तु ञ्यो न । त्रीहिमता ॥

## आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् (५. ३. ११४)

वाहीकगतायुधजीविसङ्घेभ्यः स्वार्थे ञ्यट् स्यात् । मालव्यः मालव्यौ मालवाः । टित्वान्मालवी । ब्राह्मणवाचिभ्यो राजन्यशब्दाच्च न । शालङ्कायनः । राजन्यः । राजन्यस्य ञ्यटि रूपभेदाभावेऽपि स्त्रियां ङीप् स्यादिति तन्निषेधः ॥

## वृकाट्टेण्यण् (५. ३. ११५)

आयुधजीविसङ्घाद् वृकात्स्वार्थे टेण्यण् । वार्केण्यः वार्केण्यौ वृकाः । टित्वात् ङीप् वार्केणी ।

## दामन्यादित्रिगर्तषष्ठाच्छः (५. ३. ११६)

दामनिप्रभृतिभ्यः त्रिगर्तषष्ठेभ्यश्च स्वार्थे छः स्यात् । दामनीयः दामनयः । त्रिगर्तषष्ठा इति षडायुधजीविसङ्घा उक्ताः । क्रौष्टुकीयः । क्रौष्टुकयः ।

क्रौष्टुकिर्जालमानिश्च कौण्डोपरथिदाण्डकी ।
ब्राह्मगुप्तो जानकिश्च त्रिगर्तोऽमीषु जानकिः ॥

१. 'ग्रामणी' भ. १. ह. पाठ. २. 'लौहित्य' ग, 'एव लौह' [illegible] पाठः. ३. 'कौहित्य' घ. पाठः. ४. 'अत्र' [illegible] पाठः.

स पष्ठ एषां राज्ञानामिति व्याचष्ट वृत्तिकृत् ।
त्रिगर्तेष्वेव पष्ठांशा एत इत्याह भोजराट् ॥

पर्श्वादियौधेयादिभ्यामणञौ[1] (५. ३. ११७)

आयुधजीविवाचिभ्यामाभ्यां क्रमादणञौ । पार्शवः, यौधेयः । प्राग्वद् बहुषु लुक् । पर्शवः । यौधेयाः । लुका स्वरभेदः[2] । स्त्रियाम् 'अतश्च' (४-१-१७७) इत्यकाररूपस्य तद्राजस्य लुगुक्तेः पर्श्वादेरणो लुक् । पर्शूः । मनुष्यजातित्वादूङ् । एवं यौधेयादेरञोऽपि स्त्रियां लुक्प्राप्तौ 'न प्राच्यभर्गादियौधेयादिभ्यः' (४-१-१७८) इति निषेधः । यौधेयी । शौभ्रेयी । अनन्तजातित्वात् ङीन्[3] ।

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्री[4]-मदणो यञ् (५. ३. ११८)

आयुधजीविनो गताः । अपत्याणन्तेभ्योऽभिजिदादिभ्यः स्वार्थे यञ् । आभिजितशब्दादाभिजित्यः, आभिजिताः । वैदभृत्यः, वैदभृताः । शालावत्यः, शालावताः । शैखावत्यः, शैखावताः[5][6] । शामीवत्यः, शामीवताः । और्णावत्यः, और्णावताः । श्रैमत्यः, श्रैमताः ॥

एते तद्राजाः ॥

पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च (५. ४. १)

पादान्तस्य शतान्तस्य च सङ्ख्यादेः शब्दस्य वीप्सायां द्योत्यायां वुन् प्रकृतेरन्त्यलोपश्च स्यात् । द्विपाद् अकं[7]

पादः पत् (६-४-१३०)

पादस्य भस्य पत् स्यात् । द्विपदक । स्वभावात् स्त्रीत्वं, द्विपदिकामादत्ते । द्वौ द्वौ पादावादत्त इत्यर्थः । एवं द्विशतिकामादत्ते । पादशतादन्यत्रापि दृष्टम् । द्विमोदकिका भुज्यते ॥

---

१. 'भ्योऽण्' इति मुद्रितसिद्धान्तकौमुद्यादिपाठः. २. 'स्वरे भे' M. U. S. पाठः. ३. 'प्' घ पाठः. ४. 'च्छ्रु' मुद्रितसिद्धान्तकौमुदीपाठश्च । ५, ६. 'श्रौ' घ. पाठः. ७. 'कं' M. U. S. पाठः

### दण्डव्यवसर्गयोश्च (५. ४. २)

दण्डदानयोर्द्योत्ययोः पादशतान्तादवीप्सायामपि वुन् लोपश्च स्यात् । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः, द्विपदिकां ददाति । एवं द्विशतिकामित्यादि । प्राग्वद् द्विमोदकिकामित्यादि च ॥

### स्थूलादिभ्यः प्रकारवचने कन् (५. ४. ३)

एभ्यः प्रकारवति कन् । 'स्थूलेषुमणिमधुधान्यतिलकालपुण्ड्रैरण्डचन्द्रमहद्भ्यः' (स० ५-३-४६)। स्थूलत्वविशेषवान् स्थूलकः । इषुसदृश इषुकः । मणिकः । मधुसमो मधुकः । धान्यकः । तिलकः । कालकः । पुण्ड्रकः । एरण्डकः । चन्द्रसमश्चन्द्रकः । महत्कः । 'पत्रमूलाद् व्यस्ताच्च' (स० ५-३-४८) । पत्रमूलकः । पत्रकः । मूलकः । 'अवदातात्सुरायाम्' (स० ५-३-४९) । अवदातिका सुराविशेषः 'सुराया अहौ' (स० ५-३-५०) । केऽणो ह्रस्वः । सुरावर्णोऽहि सुरकः । 'गोमूत्रादाच्छादने' (स० ५-३-५१) । गोमूत्रवर्णः प्रावारे गोमूत्रकः । तद्वदनेकरेखाविन्यासवान् वा । 'जीर्णाच्छालिषु' (स० ५-३-५२) । जीर्णकल्पा शालयो जीर्णकाः । 'यवाद्व्रीहिषु' (स० ५-३-५३) । यवसदृशा व्रीहयो यवकाः । 'कृष्णात्तिलेषु' (स० ५-३-५४) । कृष्णप्रकारास्तिलाः कृष्णकाः । 'अणोर्माषेषु' (स०५-३-५६) । अणुका माषाः । 'माषात्परिमाणे' (स० ५-३-५५) । माषकः स्वर्णपरिमाणम् । 'चञ्चद्बृहतोश्च वाच्यम्' (वा०) । चञ्चत्को बृहत्कश्च मणिः । स्वतः स्थिरोऽणुरपि प्रभावशात् तत्प्रकारः । 'चञ्चाबृंहतोः' इति पाठे केऽणो ह्रस्वः । तृणपुरुषसमश्चञ्चकः ।

### अनत्यन्तगतौ क्तात् (५. ४. ४)

अशेषसम्बन्धाभावे द्योत्ये क्तान्तात् कन् । असकलच्छिन्नं च्छिन्नकं, भिन्नकम् ॥

### न सामिवचने (५. ४. ५)

---

१. 'का'; २. 'क' M. U. ।. पाठ. ३ 'स्यादपि'।' क. ग. M. U. B. पाठ. ४. 'चण्डचन्द्रबृहन्महद्भ्यः' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. ५. 'द्व' M. U. S. 'बृहतोरिति' मुद्रितकाशिकापाठः.

अर्धनाचिन्युपपदे क्तान्तात् कन्। अर्धच्छिन्नम् । सामिच्छिन्नम्। नेमच्छिन्नम् । 'सर्वशब्देभ्यः स्वार्थे कन् वाच्यः' (वा०) । बहुतरकम् ॥

बृहत्या आच्छादने (५. ४. ६)

कन् स्यात् । 'केऽणः' (७-४-१३) । बृहतिकेति प्रावरणनाम ॥

अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः (५. ४. ७)

एभ्यः स्वार्थे खः । आशितङ्गिविति निपातनान्मुम् । अक्षिशब्दोऽत्र श्रोत्रार्थ इति रामंहरौ ।

षट्कर्णरहितो मन्त्रो ह्यषडक्षीण उच्यते ।
तदाशितङ्गवीनं स्यात्तृप्ता स्युर्यत्र धेनवः ॥
तथा यः कर्मणे शक्तः सोऽलङ्कर्मीण उच्यते ।
सा चालंपुरुषीणा स्त्री समर्था पुरुषाय या ॥
अध्युत्तरपदाद् राजाधीनो राजन्यधिश्रितः ।
अधीनः केवलस्त्वव्युत्पन्नो रूढेति कैयटः ॥
अध्युत्तरपदादिभ्य इति भोजस्त्वसूत्रयत् ।
अध्याश्रित इनोऽनेनेत्यधीन इति केचन ॥
खस्य नित्यतया न स्युरषडक्षादयः स्वयम् ।
अन्येऽपि स्वार्थिकाः केचिन्नित्याः केचिद् विकल्पिताः ॥

विभाषाञ्चेरदिक्स्त्रियाम् (५. ४. ८)

दिग्वाचिस्त्रीलिङ्गादन्यत्राञ्चत्यन्ताद् वा खः स्यात् । प्राचीनो घटः, प्राङ् घटः । एवमर्वाचीनः, अर्वाङ् । दिक्स्त्रियां तु प्राची दिगित्येव । 'अञ्चेर्लुक्' (५-३-३०) इत्यस्तातिलुगन्तात्तु अव्ययत्वेनास्त्रीत्वाद् दिश्यपि खः, स्वभावात् क्लीबत्वं च स्यात् । प्राचीनं दिग्रम्या, प्राचीनं दिश आगतः । प्राचीनं दिशि वसति । सप्तमीपञ्चम्योरप्यस्तात्यन्तेनाभिहितत्वात् प्रथमा । एवमदिश्यपि क्लीबत्वम् । प्राचीनं ग्रामः कालो वा ॥

---

१. 'षड्वर्णे'; २. 'यस्त्वयम्'; ३, ४. 'ची'; ५. 'अक्षी' M. U. S. पाठः.

जात्यन्ताच्छ बन्धुनि (५. ४. ९)

बन्धु द्रव्यं, व्यक्तिरित्यर्थः। तस्मिन् वाच्ये जात्यन्ताच्छः। विप्रो जातिरस्येति विप्रजातीयोऽयम्। समानजाताविति भाष्यप्रयोगात् क्वचिन्न। जातिमात्रे तु विप्रजातिर्नित्येत्येव ॥

स्थानान्ताद्विभाषा सस्थानेनेति चेत् (५. ४. १०)

समानस्थानवचनात् स्थानान्ताद्वा छ इष्यते।
मत्स्थानीयश्च मत्स्थानो मत्तुल्यस्थान उच्यते ॥

स्थानान्तं सस्थानेनार्थवदिति चेदित्यन्वयः ॥

अनुगादिनष्ठक् (५. ४. १३)

अनुगाद्येवानुगादिकः ॥

विसारिणो मत्स्ये (५. ४. १६)

विसारिञ्छब्दान्मत्स्ये वाच्येऽण्। वैसारिणः ॥

सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् (५. ४. १७)

पञ्चकृत्वो भुङ्क्ते ॥

द्वित्रिचतुर्भ्यः सुच्[१] (५. ४. १८)

एस्य उक्तेऽर्थे सुच् स्यात्। द्विः। त्रिः। चतुर् स्। संयोगान्तलोपः। रस्य विसर्गः। चतुः ॥

एकस्य सकृच्च (५. ४. १९)

अस्य क्रियागणनेऽर्थे सुच् सकृदादेशश्च स्यात्। सकृद् स। 'संयोगान्तलोपः'। सकृद् भुङ्क्ते ॥

विभाषा बहोर्धाविप्रकृष्टकाले (५. ४. २०)

आसन्नकाले क्रियावर्तनेऽर्थे बहोर्धा कृत्वसुच स्यात्। यामस्य बहुधा बहुकृत्वो वा भुङ्क्ते। दूरकाले तु मासस्य बहुकृत्वो भुज्यते[४] ॥

१. 'गदषेवा' क. ख. ग. छ. M. U. S. पाठः. २. 'ग' M. U. S. पाठः ३. 'र् द्विः', ४. 'भुध्यन्ते' ख. M. U. S. पाठः

तत्प्रकृतवचने मयट् (५. ४. २१)

तत्प्रचुरमित्यर्थे मयट् स्यात् । प्रचुरमन्नमन्नमयम् । यवागूमयी । स्वार्थत्वात् स्वलिङ्गमेव । तत्प्रचुरमित्युच्यतेऽस्मिन्नित्यर्थेऽपि मयट् स्यात् । उच्यत इत्यतन्त्रम् । अन्नं प्रचुरमस्मिन्नित्यन्नमयो यज्ञः । तत्प्रधानमन्त्रेत्यर्थेऽप्याह कौमुदी । पार्थमयं पाण्डवसैन्यम् ॥

समूहवच्च बहुषु (५. ४. २२)

प्रकृतवस्तूनां बहुत्वे समूहवत्प्रत्ययः स्यात् मयट् च । प्रचुरा मोदका एव मौदकिकम् । अचित्तत्वाट्ठक् । मोदकमयम् । एवमापूपिको यज्ञः । अपूपमयः ॥

अनन्तावसथेतिहभेषजाञ्ञ्यः (५. ४. २३)

अनन्तमेवानन्त्यम् । आवसथ्यं गृहम् । इतिहेत्युपदेशपरम्परा । तदेवैतिह्यम् । भैषज्यम् ॥

देवतान्तात्तादर्थ्ये यत् (५. ४. २४)

अग्निदेवतार्थमग्निदेवत्यम् ॥

पादार्घाभ्यां च (५. ४. २५)

तादर्थ्ये यत् । पाद्यम् ।

गन्धादिमिश्राम्बुदानं मधुपर्कार्पणाथवा ।
अर्घस्तदर्थं तोयाद्यं द्रव्यार्घं वार्घ्यमुच्यते ॥

चकारात् स्वार्थे । नव्यम् । क्षेम्यं । तथैव स्थितं तथ्यमित्याद्यपि । 'नवस्य नूभावस्तनप्तनॅन्खाश्च वाच्याः' (वा०) । नूत्नम् । नूतनम् । 'ओर्गुणः' (६-४-१४६) । नवीनम् । 'नश्च पुराणे प्रात्' (वा०) । पुराणार्थात् प्रशब्दात् नश्च त्नप्तनॅन्खाश्च स्युः । प्रणं, प्रत्नं, प्रतनं, प्रीणम् । 'भागरूपनामभ्यो धेयप्रत्ययो वाच्यः' (वा०) । भागधेयमित्यादि । 'भागाद्यच्च' (२-४-५४) इति भोजः । भाग्यम् । 'आग्नीध्र-

---

१. 'न्त्रः' M. U. S. पाठः. २. 'पाद्यम् अर्घ्यम् ।' ग. छ. पाठः. 'पाद्यं गन्धादिमिश्राम्बु मधुपर्कार्पणं तथा' । M. U. S. पाठः. ३ 'नप्खा' मुद्रितवार्त्तिकपाठः, 'नखा' इति ख. ग. पाठः. 'नखाश्च' M. U. S. पाठः. ४. 'नम् नवी', ५. 'नखाश्च', ६. 'यो वा' ख. M. U. S. पाठः.

साधारणादञ्' (वा०) । आग्नीध्री शाला, साधारणी भूमिः । एषां विकल्पितत्वादञभावे आग्नीध्र । साधारणा ॥

अतिथेर्ञ्यः[1][2] (५. ४. २६)

अस्मात् तादर्थ्ये ञ्यः । आतिथ्यम् ॥

देवात्तल् (५. ४. २७)

अस्मात्स्वार्थे तल् । तलः स्त्रीत्वाद् देवता ॥

अवेः कः (५. ४. २८)

अविरेवाविकः ॥

यावादिभ्यः कन् (५. ४. २९)

याव एव यावकः । मणिक इत्यादि । 'ऋतावुष्णशीताभ्याम्' (स० ५-४-१५) । उष्णकः शीतकश्च ऋतुः । 'पशौ लूनवियाताभ्याम्' (स० ५-४-१६) । लूनकः पशुर्यज्ञे । वियातकोऽयं गौः । 'जातौ प्रियचित्रगुह्यगोलकुब्जादिभ्यः' (स० ५-४-१७) । प्रियकश्चित्रकश्च मृगजातिः । गोलकः कृमिजातिः । कुब्जको गजजातिः । आद्युक्तेः पुस्तकम् । 'अणोर्निपुणे' (स० ५-४-१८) । अणुकः सूक्ष्मदृक् । 'पुत्रात् कृत्रिमे' (स० ५-४-१९) । पुत्रकः शालभञ्जिका । 'स्नाताद्वेदसमाप्तौ' (स० ५-४-२०) । स्नातकः समावृत्तः । 'शून्याद्रिक्ते' (५-४-२१) । जलादिरिक्तः कुम्भादिः शून्यकः । अन्यत्र शून्यो देशः । 'तनोः सूत्रे' (स० ५-४-२३) । तनुकः सूक्ष्मतन्तुः । 'कुमारक्रीडनकेभ्यः' (स० ५-४-२५) । कन्दुकः । भ्रमरकः । 'ईयसश्च' (स० ५-४-२७) । श्रेयस्कः, ज्यायस्कः ॥

लोहितान्मणौ (५. ४. ३०)

लोहितकः पद्मरागः ॥

---

१, 'ण्यः', २. 'ण्यः', ३. 'का' M. U. B. पाठः

वर्णे चानित्ये (५. ४. ३१)

कोपादिजे वर्णे वाच्ये लोहितात्कन् । लोहितकौ गण्डौ । स्त्रियां लोहिनिका, लोहितिकेतीष्टम् ॥

रक्ते (५. ४. ३२)

लाक्षादिना रक्ते वाच्ये लोहितात्कन् । लोहितकः पटः । प्राग्वल्लोहिनिका, लोहितिका वा शाटी ॥

कालाच्च (५. ४. ३३)

कोपादिवर्णे रक्ते च वाच्ये कालात् कनिष्यते ।
शोकेन कालकं वक्त्रं नील्या कालकमंशुकम् ॥

विनयादिभ्यष्ठक् (५. ४. ३४)

एभ्यः स्वार्थे ठक् । 'विनयसमयाकस्मात्कथञ्चिदत्ययविशेषव्यवहारोपचारेभ्यः' (स० ५. ४. ३६) । विनय एव वैनयिकः । सामयिकः । दान्तत्वाच्च कत्वम् । आकस्मिकमहेतुकम् । तान्तत्वात्कत्वम् । काथञ्चित्कं कृच्छ्ररूपम् । आत्ययिकः । वैशेषिकः । व्यावहारिकः । औपचारिकः । 'समो गत्युद्घाचारोत्कर्षपरायप्रदानेभ्यः' (स० ५. ४. ३७) । साङ्गतिकं, सामूहिकं, सामाचारिकं, सामुत्कर्षिकं, साम्परायिकं, साम्प्रदानिकम् । 'उपायाद्ध्रस्वश्च' (स० ५. ४. ३८) । औपयिकम् । एकान्तो नियतः स एव विनयादित्वादैकान्तिक इति हरः । सम्प्रत्येव साम्प्रतिकमिति च । पदातिरेव पादातिक इति च स्वामी । विषय एव वैषयिक इति शृङ्गारे । मौक्तिकमिति विनयादिपाठादिति वामनः । मुक्तासमूहे तु हारादावचित्तत्वात् ठकि स्यात् ॥

[1]वाचो व्याहृतार्थायाम् (५. ४. ३५)

अस्यां वाचि वाच्यायां वाचः स्वार्थे ठक् । राज्ञा दूतं प्रयुक्तार्थत्वात् सन्देशवाग्वाचिकम् । लेखादिना सूचितार्थत्वात् सन्देशशेषो वाचिकमित्यन्ये ॥

1. 'राज्ञा दिभ्यष्ठक्' इति मुद्रितसरस्वतीकण्ठाभरणपाठः. 2. 'क्षमादि' क. ख. M. U. 8. पाठः.

## तद्युक्तात्कर्मणोऽण् (५. ४. ३६)

सन्देशवाग्बोधितं यत् कर्मास्मात्स्वार्थिकोऽण् भवेत्।
नृपस्य वाचिकं श्रुत्वा कार्मणं सचिवोऽकरोत् ॥

तदुक्तमेव कर्माकरोदित्यर्थः। तच्च नृपवशीकरणमूलं भवतीति लक्षणया वशीकरणमूलं कर्म कार्मणमुच्यते ॥

## ओषधेरजातौ (५. ४. ३७)

सैन्धवाद्यपि रोगहरं वस्त्वौषधम्। जातौ त्वोषधयः ॥

## प्रज्ञादिभ्यश्च (५. ४. ३८)

स्वार्थेऽण्। 'प्रज्ञवणिगुशिक्प्रत्यक्षदेवताविद्यामनश्चक्षुःश्रोत्रशत्रुयोधचोरेभ्यः'(स० ५- ४- ४३)। प्रजानातीति प्रज्ञः स एव प्राज्ञः वाणिजः। उशिक्कमनीयः स एवौशिजः। प्रात्यक्षः। दैवतम्। वैद्यम्। मानसम्। चाक्षुषम्। श्रौत्रम्। श्रौत्राच्छरीर इति वृत्तिः। श्रौत्रं गात्रम्। शात्रवः। यौधः। चौरः। 'षोडद्विदन्त्रुद्धचिकीर्षद्वसुमरुत्सत्वद्दशार्हाशनिबन्धुवयःकुञ्चभ्यः' (स० ५- ४- ४४)। षौडतः। विदन् वैदतः। औद्धतः। चैकीर्षतः। वासवः। मारुतः। सात्वतः। दाशार्हः। आशनः। बान्धवः। वायसः। क्रौञ्चः। 'रक्षःपिशाचविकृतव्याकृतसन्तपनाद्द्वितानीदादिभ्यः' (स० ५- ४- ४५)। राक्षसः। पैशाचः। वैकृतम्। वैयाकृतम्। सान्तपनं व्रतभेदः। द्वितैव द्वैतम्। आग्नीधः। आग्रुक्ते रक्षोघ्नमेव राक्षोघ्नम्। चरित्रमेव चारित्रम्। परिप्लवश्चलः। स एव पारिप्लवः। सर्वेषां विधेयोऽधीन इति वैधेयो मूर्खः। प्रतिभैव प्रातिभम्। सम्प्रत्येव साम्प्रतम्। नरक एव नारकः। असुर एवासुरः चर एव चारः। अनुभाव एवानुभावः। अमर्ष एवामर्षः। एकाग्र एवैकाग्रः। जेतैव जैत्रः। उणादिषु बाहुलकाद् त्रणिति माधवः। 'कृष्णान्मृगे' (स० ५- ४- ४६) कार्ष्णो मृगः 'उद्धतकृष्णमृगे' इति केचित्। औद्धतः कृष्णमृगः ॥

## मृदस्तिकन् (५. ४. ३९)

१. 'न' क. छ. M. U. S. पाठः. २. 'क्षम् ।' M. U. S. पाठः. ३. 'चाक्षुरामहायणाश्रयणसाधारणविकृतव्याकृतसान्तपनद्विसामिचलन्दीनामादिभ्यः' मुद्रितसरस्वतीकण्ठाभरणपाठः.

स्वार्थे मृत्तिका ॥

सस्नौ प्रशंसायाम् (५. ४. ४०)

प्रशस्ता मृत् मृत्सा, मृत्स्ना ॥

बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् (५. ४. ४२)

कर्मादिकारकवृत्तेर्बह्वल्पवाचकात् शस् वा स्यात् । बहूनि, बहुभिः, बहुभ्यः इत्याद्यर्थे बहुशो ददाति । भूरिशः, अल्पशः, स्तोकशः । अत्र स्त्रियां पुंवत्त्वं वाच्यम् । बह्वीरित्यादावपि बहुशः । बह्वर्थत्वात् त्रिश इत्याद्यपि ।

शसयं मङ्गले वाच्यः कल्याणे बहुशो ददौ ।
दाने भयादिजेऽल्पत्वं शुभं तत्राल्पशो ददौ ॥

संख्या अकारकत्वाद् बहूनां स्वामीत्यत्र न ॥

सङ्ख्यैकवचनाच्च वीप्सायाम् (५. ४. ४३)

सङ्ख्याशब्दादेकार्थाच्च कारकाद् वीप्सायां शस् वा स्यात् द्वौ द्वावित्याद्यर्थे द्विशः, त्रिशः, कतिशः, गणशः, तावच्छः । प्रस्थादयः स्वत एकार्थाः । प्रस्थं प्रस्थं ददाति प्रस्थशः, पणशः, पादशः ॥

ऋचः शे (६. ३. ५५)

ऋक्सम्बन्धिपादस्य शसि परे पद्भावः स्यात् । पादं पादं शंसति पच्छः शंसति । अन्येषामपि प्रकरणादिनैकत्वसिद्धौ स्यात् । कुण्डलशो दत्त्वा गतः । 'अत्यन्तस्वार्थेऽपि शस् वाच्यः' । प्रायशः, सर्वशः, एकैकशः ॥

प्रतिः प्रतिनिधिप्रतिदानयोः (१. ४. ९२)

अनयोरर्थयोः प्रतिः कर्मप्रवचनीयसंज्ञः ॥

प्रतिनिधिप्रतिदाने च यस्मात् (२. ३. ११)

यत्सम्बन्धिनी प्रतिनिधिप्रत्यर्पणे कर्मप्रवचनीयेनोच्येते तस्मात् पञ्चमी स्यात् ॥[2]

१. 'स्वं द', २. 'न्निधिः पा' M. U. S. पाठः

